रानतीत्य तेनैव मन्त्रिपुत्रेण युतः कलिङ्गाभिमुखं ययौ। प्राप्य तन्नगरं कर्णोत्पलनृपतेः, अन्विष्य च दन्तघाटकस्य भवनं, दृष्ट्वा च तददूरे, वासार्थं कस्याश्चित् वृद्धाया योषितो गृहं तौ राजपुत्रमन्त्रिपुत्रौ प्राविशताम्। तत्र च वाहौ यवससलिलैः पूरयित्वा गुप्तमवस्थाप्य मन्त्रिपुत्रः तां वृद्धामपृच्छत्,—"वृद्धे ! कच्चित् अस्मिन् नगरे कमपि दन्तघाटकनामानं वेत्सि ?" तदाकर्ण्य सा जरती सादरं तमभाषत,—"वत्स ! सुष्ठु वेद्मि, तस्याहं धात्री अस्मि, तेनैवाहं पद्मावत्याः स्वदुहितुः पार्श्वे स्थापिता; किन्तु अहं तत्राधुना अपहृताम्बरा न गच्छामि, जातु कुपुत्रः कितवो मे वस्त्रं दृष्ट्वैव सद्यः हरेत्" इति। एवमुक्तवतीं तां हृष्टः मन्त्रिपुत्रः स्वोत्तरीयादिदानेन सन्तोष्य पुनरब्रवीत्,—"मातः ! त्वम् आवाभ्यां यद् यत् कथ्यते, तत्तत् सुगुप्तं कुरुष्व; तां दन्तघाटसुतां पद्मावतीं गत्वा वद,—'यस्त्वया सरसीतटे राजपुत्रो दृष्टः, सोऽत्र आगतः, तेनार्थिताऽहं त्वदन्तिकं प्रणयादायाता' इति"।

तदाकर्ण्य सा वृद्धा दानवशीकृता तदैव पद्मावतीपार्श्वं गत्वा

---

रहने वाले नौकरों को भी पीछे छोड़ कर उसी मन्त्रिपुत्र के साथ कलिङ्ग देश की ओर गया। कर्णोत्पल राजा के उस नगर में पहुँच कर और दाँत बनाने वाले का घर खोज कर उसके समीप में ही किसी वृद्धा स्त्री का घर देख कर वे दोनों राजकुमार तथा मन्त्रिकुमार निवास के लिये उस घर में प्रवेश किये। और वहाँ दोनों घोड़ों को घास और पानी से परिपूर्ण करके छिपा कर रख दिये, तब मन्त्रिपुत्र ने उस वृद्धा से पूछा—"हे वृद्धे ! क्या तुम इस नगर में किसी दन्तघाटक को जानती हो ?" यह सुनकर उस वृद्धा ने आदर के साथ उससे कहा—"बच्चे ! अच्छी तरह जानती हूँ, उसकी मैं दाई हूँ, उसी के द्वारा अपनी पुत्री पद्मावती के पास मैं रक्खी गई हूँ। किन्तु वस्त्र चोरी चले जाने से आजकल मैं वहाँ नहीं जाती हूँ। मेरा पुत्र कुपुत्र तथा धूर्त है कभी भी अच्छा वस्त्र देखता है तो चुरा लेता है"। यह कहने वाली उस वृद्धा को अपना दुपट्टा आदि देकर सन्तुष्ट करके प्रसन्न हो कर मन्त्रिपुत्र ने फिर कहा—"माता जी ! हम दोनों जो-जो कहते हैं वह काम तुम गुप्तरूप से करो; उस दन्तघाटक की पुत्री पद्मावती के पास जाकर कहो कि—"सरोवर के तीर में तुमने जिस राजकुमार को देखा था वह यहाँ आया है; उसी के द्वारा प्रार्थना किये जाने पर मैं तुम्हारे पास प्रेम के कारण आयी हूँ।"

यह सुन कर दान से वशीभूत हुई उस वृद्धा ने उसी समय पद्मावती के

कृतवानिति स एवात्र पातकी"। इति निशम्य स वेतालः तस्य राज्ञः दार्ढ्यं परीक्षितुं मायाबलात् तत्क्षणं तमेव शिंशपातरुमशिश्रियत्। राजाऽपि निःशङ्कः पुनरमुम् आनेतुं तत्रागात्।

---

पातकी है"। यह सुन कर उस वेताल ने उस राजा की दृढ़ता की परीक्षा लेने के लिये माया के बल से उसी समय उसी शीशम के पेड़ के पास चला गया। राजा भी निःशङ्क होकर फिर उसको लाने के लिये वहाँ गया।

# अथ द्वितीयकथा

अथ स राजा त्रिविक्रमसेनः पुनस्तं वेतालमानेतुं शिंशपातरुमूलमगमत्। यावत्तत्र प्राप्तः समन्तात् वीक्षते स्म, तावत् तं वेतालं भूमौ कूजन्तं ददर्श। ततश्च तस्मिन् नृपे तं मृतदेहस्थं वेतालं स्कन्धमारोप्य जवात् तूष्णीमानेतुं प्रवृत्ते स्कन्धस्थितः स वेतालस्तमब्रवीत्,—"राजन्। महति अनुचिते क्लेशे पतितोऽसि, तस्मात् तव विनोदाय पुनः कथामेकां कथयामि, श्रूयताम्।—

अस्ति कालिन्दीतटे ब्रह्मस्थलाभिधः कश्चिदग्रहारः। तत्र अग्निस्वामीति समभवत् कश्चित् वेदपारगो विप्रः। तस्य अतिरूपवती मन्दारवती नाम कन्यका अजनि, यांनवान घंलावण्यांनिर्म्माय विधिर्नियतं निजं स्वर्गनारीपूर्वनिर्माणकौशलं जुगुप्सते। तस्यां शैशवातिक्रान्तायां कान्यकुब्जात् समसर्वगुणोपेतास्त्रयो ब्राह्मणदारकाः समाययुः। तेषामेकैकः आत्मार्थं तत्पितरं तामयाचत। तत्पिता प्राणात्ययेऽपि ताम-

---

## दूसरी कथा

इसके बाद वह राजा त्रिविक्रम सेन फिर उस वेताल को लाने के लिये शीशम के पेड़ की जड़ में गया। वहाँ पहुँच कर जब चारों तरफ देखते हैं तब उस वेताल को जमीन पर पड़े हुए तथा अस्पष्ट शब्द करते हुए उन्होंने देखा। तब मृतशरीर में स्थित उस वेताल को कन्धे पर चढ़ा कर उस राजा के चुपचाप वेग से लाना प्रारम्भ करने पर, कन्धे पर स्थित उस वेताल ने उसको कहा—"महाराज! बहुत बड़े अनुचित क्लेश में पड़ गये हो, इस कारण से तुम्हारे मनोरञ्जन के लिये फिर एक कथा कहता हूँ, सुनो—

यमुना के किनारे ब्रह्मस्थल नामक कोई गाँव है। वहाँ कोई अग्निस्वामी नाम का वेद में पारंगत ब्राह्मण था। उसकी अत्यन्त सुन्दरी मन्दारवती नाम की कन्या हुई। नवीन तथा अपूर्व सौन्दर्य से युक्त उस कन्या को बनाकर विधाता ने अवश्य पूर्व में अपनी स्वर्गीय अप्सराओं के निर्माण करने की कला से घृणा की होगी। उसका बचपन व्यतीत होने पर कान्यकुब्ज देश से समान रूप से सभी गुणों से युक्त तीन ब्राह्मणकुमार आये। उन में से प्रत्येक ने अपने लिये उसके पिता से उस लड़की की याचना की। उसके पिता ने प्राणनाश

प्रियतमा कन्याऽभवत् । सा तु तेन समानधनयौवनकुलशालिने नेत्रचकोरामृतरश्मये समुद्रदत्ताख्याय बणिक्पुत्राय ताम्रलिप्तनिवासिने प्रदत्ता। कदाचित् सा स्वदेशस्थे पत्यौ, पितृगृहे स्थिता दूरात् कमपि पुरुषयुवानं कान्तविग्रहं ददर्श। दृष्ट्वैव सा चपला स्मरमोहिता गुप्तं सखीमुखेनानीतं प्रच्छन्नकामुकं तं भेजे। इत्थं प्रतिरात्रं सा तदेकासक्त-मानसा तेन सह रममाणा सुखं बुभुजे।

अथैकदा स तस्याः पतिः स्वदेशात् आगतः श्वशुरयोः परां प्रीतिमवर्द्धयत्। दिने च उत्सवेनातिक्रान्ते सा वसुदत्ता मात्रा कृतभूषणा निशि वासगृहं प्रेषिता शय्यास्थायिनं पतिं भेजे; तेन च रतिं प्रार्थिता सा अन्यमानसा अलीकसुप्तिकामकरोत्। क्रमेण सोऽपि पतिः पानमत्तः अध्वश्रान्तश्च निद्रया जह्रे। ततः सर्वस्मिन् भुक्तपीतजने क्रमेण सुप्ते कश्चित् चौरः सन्धिं भित्त्वा तस्मिन् वासगृहे प्राविशत्। सा च वणि-क्नन्दिनी तत्काले तमपश्यन्ती समुत्थाय स्वजारकृतसङ्केता निभृतं

---

प्राण से भी बढ़कर प्रिय वसुदत्ता नाम की कन्या थी। वह कन्या उस सेठ के द्वारा अपने समान धन तथा उच्चकुल वाले, ताम्रलिप्त नामक गाँव में रहनेवाले, बनियाँ के पुत्र, लोगों के नेत्ररूपी चकोर के लिये चन्द्रमा स्वरूप, समुद्रदत्त नामक युवक को दे दी गयी। किसी समय पति के अपने देश में रहने पर पिता के घर में रहती हुई इस वसुदत्ता ने दूर से किसी सुन्दर शरीर वाले युवक को देखा। देखते ही काममोहित होकर वह चञ्चला वसुदत्ता गुप्तरूप से उस छिपे हुए कामी को सखी के वचन के द्वारा बुलवा कर रमण करने लगी। इस प्रकार उसी में आसक्त मन वाली वह उसके साथ रमण करती हुई सुख भोग करने लगी।

इसके बाद एक दिन उसका वह अपना पति अपने देश से आया तथा अपने सास-श्वसुरों को अत्यन्त आनन्दित कर दिया। वह दिन तो उत्सव के द्वारा बीत गया, रात में वह वसुदत्ता माता के द्वारा आभूषण पहना कर पति के निवासगृह में भेज दी गयी जो कि शय्या पर रहने वाले पति के पास पहुँची। उस पति के द्वारा सम्भोग की प्रार्थना की गयी किन्तु अन्य के ऊपर मन रखने वाली उसने झूठ ही सो जाने का आकार बना लिया। क्रमशः रास्ते का थका हुआ वह पति भी शराब की नशा में सो गया। तब क्रमशः सभी लोगों के खा पीकर सो जाने पर किसी चोर ने सेन्ध काट कर उस वास गृह में प्रवेश किया। वह बनिये की पुत्री उस चोर को न देखती हुई उठ कर अपने जार के दिये हुए सङ्केत के अनुसार निकल गई। वह

न्यस्मै दातुमनिच्छन् तन्मध्यादेकस्मै दातुं मतिमकरोत्। सा तु कन्या अन्ययोर्बाधात् भीता कियन्तं कालं न पाणिमग्राहयत्। ते च त्रयोऽपि तस्याः मुखेन्दुनिक्षिप्तदृष्टयः चकोरव्रतमालम्ब्य दिवानिशं तत्रैव तस्थुः।

अथाकस्मात् समुत्पन्नेन ज्वरदाहेन आर्त्ता सा मन्दारवती पञ्चतामवाप। ततस्ते विप्रकुमारास्तां परासुं दृष्ट्वा शोकार्त्ता कृतप्रसाधनां श्मशानं नीत्वा अग्निसादकुर्वन्। ततश्च तेषामेकः तत्र मठं निर्माय तद्भस्मशय्यायां भैक्ष्येण जीवन्नतिष्ठत्। द्वितीयोऽस्थीनि तस्या उपादाय भागीरथ्यां निक्षेप्तुं जगाम। तृतीयस्तु तापसो भूत्वा देशान्तराणि भ्रमितुमगात्। स तु भ्राम्यन् तापसः वज्रालोकाभिधं ग्रामं प्राप्य कस्यापि विप्रस्य गृहे अतिथिरभूत्; तेन च गृहपतिना पूजितो यावत् तत्र भोक्तुं प्रावर्त्तत, तावत्तस्य एकः शिशुः रोदितुं प्रवृत्तोऽभवत्। स च शिशुः सान्त्व्यमानोऽपि यदा न व्यरंसीत् तदाऽस्य गृहीणी तं बाहावादाय ज्वलत्यग्नौ क्रुधा प्राक्षिपत्; क्षिप्त एव स कोमलाङ्गस्तत्क्षणात् भस्मसादभूत्। तदवलोक्य स तापसः सञ्जातरोमाञ्चः प्राब्र-

---

होने पर भी उन तीनों से अन्य को कन्या देना न चाहते हुए उन्हीं तीनों में से एक को देने का विचार किया। उस कन्या ने अन्य दोनों को कष्ट पहुँचने के भय से भीत हो कर कुछ दिनों तक अपना पाणिग्रहण नहीं कराया। और वे तीनों उसके मुख रूपी चन्द्रमा पर आँख लगाये हुए, चकोर का व्रत धारण करके दिनरात वहीं रहने लगे।

इसके बाद एकाएक उत्पन्न ज्वर की जलन से पीड़ित होकर वह मन्दारवती मर गयी। इसके बाद वे तीनों ब्राह्मणकुमार उसे मरी हुई देख कर शोक से पीड़ित होकर उसे आभूषणों से तथा पुष्पों से सजा कर श्मशान ले जाकर अग्निसंस्कार कर दिये। उनमें से एक वहीं पर मढ़ई बनाकर भिक्षा के द्वारा जीवन निर्वाह करते हुए उसकी भस्म की शय्या पर रहने लगा। दूसरा उसकी अस्थियों को लेकर गङ्गाजी में प्रवाह करने के लिये चला गया। तीसरा तपस्वी होकर अनेक देशों में भ्रमण करने के लिये गया। वह घूमने वाला तपस्वी वज्रालोक नामक गाँव में पहुँच कर किसी ब्राह्मण के घर में अतिथि हुआ। उस गृहस्वामी के द्वारा सम्मानित होकर वहाँ भोजन करने के लिये चला, तब तक एक बच्चा रोना प्रारम्भ किया। वह बच्चा सान्त्वना देने पर भी जब नहीं चुप हुआ तब उस ब्राह्मण की पत्नी ने क्रोध में उसके दोनों हाथ पकड़ कर जलती हुई आग में उसे फेंक दिया। वह कोमल अङ्गों वाला बच्चा आग

निरगात्। तदालोक्य स चौरः विघ्नितामिलाषो व्यचिन्तयत्,—"येषामाभरणानामर्थे अहं प्रविष्टः, तैरेवाभरणैर्वृता एषा निशीथे निर्गता, तत् क गच्छतीति द्रष्टव्यम्" इति पर्य्यालोच्य निर्गत्य च स चौरः तां वणिक्सुतामनुययौ।

साऽपि पुष्पादिसम्भारहस्तया सख्या संयुता गत्वा वाह्यमुद्यानं नातिदूरगं प्रविवेश, ददर्श च तत्र सङ्केतस्थानमागतं नगररक्षिभिश्चौरबुद्ध्या पाशं कण्ठे दत्त्वा निहत्य वृक्षे लम्व्यमानं तं प्रच्छन्नकामुकम्। सा तु तदवलोक्य विह्वला,—"हा! हताऽस्मि" इति वादिनी कृपणं विलपन्ती भूमौ पतात, रुरोद च। अथ तं निजकामुकं वृक्षादवतार्य्य उपवेश्य च गतासुम् अङ्गरागैरलङ्कारैः पुष्पैश्चालञ्चकार। यावच्च सा तस्य मुखम् (द) उन्नमय्य कामार्त्ता परिचुम्बति, तावत् स निर्जीवः कामुकः वेतालानुप्रविष्टः सन् दन्तैस्तस्या नासिकां चिच्छेद; तेन सा विह्वला तस्मात् प्रदेशात् सव्यथा अपसृताऽपि, —"अहो! किंस्वित् जीवत्यसौ?" इति पुनरेत्य यावत् पश्यति स्म, तावत् तं वीतवेतालं निश्चेष्टं पतितं मृतं निश्चित्य सा भीता परिभूता च रुदती शनैः गृहं प्रत्याजगाम। सचालक्षितः प्रच्छन्नस्थितश्चौरः सर्वमेतत् व्यलोकयदचि-

---

देख कर अभिलाषा में विघ्न होने पर वह चोर सोचने लगा—"जिन आभरणों के लिये मैंने यहाँ प्रवेश किया था उन आभरणों के पहने हुए यह दो पहर रात में ही निकल गयी है, तो कहाँ जाती है, यह देखना चाहिये" यह विचार करके निकल कर वह चोर भी उस बनिये की पुत्री के पीछे-पीछे गया।

वह भी फूल आदि सामग्री रखने वाली सखी से संयुक्त होकर वाहर जाकर थोड़ी ही दूरी पर एक बगीचे में प्रविष्ट हुई और वहाँ उसने सङ्केत स्थान पर आये हुए, और नगर-रक्षकों के द्वारा चोर समझ कर गले में फाँसी लगा कर मार कर पेड़ में लटकाए हुए उस गुप्तकामुक को देखा। वह तो यह देखकर व्याकुल होकर "हा! मैं तो मारी गयी" यह कहती हुई, दीन होकर विलाप करती हुई भूमि पर गिर गई और रोने लगी। इसके बाद अपने उस कामुक को वृक्ष से उतार कर बैठा कर उस मृतक को अङ्ग-लेपन द्रव्य पाउडर आदि से अलङ्कारों से तथा फूलों से उसने अलङ्कृत कर दिया। जब कामपीड़ित होकर वह उसका मुख उठा कर चूमने लगी तब प्रेत के प्रवेश करने से उस मृतक कामुक ने दाँतों से उसकी नाक काट ली। इससे व्याकुल तथा पीडित हो कर उस स्थान से दूर हट जाने पर

वीत्,—"हा धिक् ! कष्टं ! प्रविष्टोऽहं ब्रह्मराक्षसवेश्मनि, तस्मात् मूर्त्तं किल्विषमिदमन्नं नाधुना भक्षयामि"। एवंवादिनं तमतिथिं स गृहस्थः प्रत्यवादीत्,—"ब्रह्मन् ! पश्य मे पठितसिद्धस्य मृतसञ्जीवनीं शक्तिम्" इत्युक्त्वा पुस्तकमुद्धाट्य, तां विद्यां बहिष्कृत्य, अनुवाच्य च तस्मिन् भस्मनि जलमक्षिपत्; क्षिप्तमात्रे च जले स पुत्रस्तथैव जीवन्नुदतिष्ठत्। ततः स तापसः सुनिर्वृतस्तत्र सहर्षं बुभुजे। गृहस्थोऽपि स नागदन्तके पुस्तकमवस्थाप्य, भुक्त्वैव तेन तापसेन सह रात्रौ शयनमभजत।

अथ सुप्ते गृहपतौ स तापसः स्वैरमुत्थाय शङ्कितः स्वप्रियाया मन्दारवत्या जीवनार्थं तां पुस्तिकामग्रहीत्। गृहीत्वैव तस्मात् निर्गत्य रात्रिन्दिवं व्रजन् शनैस्तत् श्मशानमासदत्; अद्राक्षीच्च सहसा तं द्वितीयम् उपस्थितं, या हि गङ्गाऽम्भसि तदस्थि क्षेप्तुमगात्। अथ प्राप्य च तत्रस्थं तस्या भस्मनि शायिनं तृतीयं निबद्धमठं स तापसः प्रोवाच,—"मठिका त्यज्यतां भ्रातः ! प्रियां तामहमुत्थापयामि" इति।

---

में गिरते ही उसी समय भस्म हो गया। यह देख कर रोमाञ्चित होकर उस तपस्वी ने कहा—"अरे ! अरे ! मैंने तो ब्रह्मराक्षस के घर में प्रवेश किया, अतः यह अन्न तो प्रत्यक्ष पाप है मैं नहीं खाऊँगा"। ऐसा कहने वाले उस अतिथि को उस गृहस्थ ने कहा—"हे ब्राह्मण ! पढ़ने में मुझ सिद्ध पुरुष की सञ्जीवनी शक्ति देखिये" यह कह कर पुस्तक खोल कर उस विद्या को बाहर निकाल कर और पढ़ कर उस भस्म के ऊपर जल छिड़क दिया। जल के छिड़कते ही वह पुत्र उसी प्रकार जीवित होकर उठ कर खड़ा हो गया। तब उस तपस्वी ने शान्त होकर वहाँ प्रसन्नतापूर्वक भोजन किया। वह गृहस्थ भी खूंटी पर पुस्तक को रख कर भोजन करके उस तपस्वी के साथ रात में बिछौने पर सो गया।

इसके बाद गृहस्वामी के सो जाने पर उस तपस्वी ने धीरे से उठ कर सशङ्कित होते हुए अपनी प्रिया मन्दारवती के जीवन के लिये वह पुस्तिका ले ली। लेते ही वहाँ से निकल कर रात-दिन चलते हुए क्रमशः उस श्मशान में पहुँचा और एकाएक उस द्वितीय ब्राह्मण कुमार को भी वहाँ उसने उपस्थित देखा जो गङ्गा जी के जल में उसकी अस्थि फेंकने के लिये गया था। तब वहाँ जा कर उसकी भस्म के ऊपर मढ़ई बना कर निवास करने वाले तृतीय ब्राह्मणकुमार को कहा—"हे भाई ! इस मढ़ई को छोड़ दो; मैं उस प्रियतमा को जिलाऊँगा" तब उन दोनों के द्वारा आग्रह के साथ पूछा गया

न्तयच्च,—"अहो ! किमिदं पापया अनया कृतम् ? हा ! स्त्रीणामाशयः कथमीदृक् भीषणः ? तदिदानीमपि एषा किं नु कुर्य्यात् ?" इति विचिन्त्य कौतुकात् स चौरः भूयोऽपि दूरात् तामनुससार ।

सा च पापिनी गृहं प्रविश्यैव उच्चकैः प्ररुदती एवमब्रवीत्,—"परित्रायध्वं माम्, एतेन दुष्टेन भर्त्तृरूपेण शत्रुणा मम निरपराधाया नासिका छिन्ना" इति । ततः रोदनमाकर्ण्य सहसा तत्परिजनाः सर्वे ससम्भ्रमम् उदतिष्ठन्, पतिश्च प्रबुबुधे । अथ तत्पिता समेत्य तां छिन्ननासिकां दृष्ट्वा क्रुद्धस्तं जामातरं बन्धयामास । स च इतिकर्त्तव्यविमूढ़स्तदानीं बध्यमानोऽपि मूकवदतिष्ठत्, न किमपि प्राब्रवीत् । अथ क्रमेण सर्वेषु विबुद्धेषु शृण्वत्सु, तस्मिंश्च चौरे सर्ववृत्तान्तज्ञे तस्मादपसृते, गतायां शनैः शर्वर्य्यां, स वणिक्सुतः तेन श्वशुरेण राजान्तिकं नीतः ; सा च छिन्ननासा वसुदत्ता तत्राऽऽगता । राजा च

---

भी—'अरे ! क्या यह जीवित है ?' यह सोचती हुई फिर आकर जब देखती है, तब उस प्रेत के हट जाने से चेष्टारहित पड़े हुए को मृतक निश्चय कर के वह अपमानित तथा भयभीत होकर धीरे-धीरे रोती हुई घर लौट आई । अलक्षित होकर छिप कर बैठे हुए उस चोर ने यह सब वृत्तान्त देखा और सोचा—"अरे ! इस पापिनी ने यह क्या किया ? हाय ! स्त्रियों का हृदय ऐसा भयङ्कर क्यों होता है ? तो पता नहीं कि इतने पर भी यह क्या करेगी ?" यह सोच कर कुतूहलवश वह चोर दूर-दूर से ही फिर उसका अनुसरण करने लगा ।

वह पापिनी तो घर में प्रवेश करते ही जोरों से रोती हुई इस प्रकार कहने लगी—"अरे ! मेरी रक्षा करो; इस दुष्ट पतिरूपी शत्रु ने मेरी नाक काट ली है" । तब एकाएक रोदन सुन कर उसके चारों तरफ के सभी आदमी घबड़ाहट के साथ उठ गये । और पति भी जाग गया । इसके बाद उसके पिता ने आकर कटी हुई नाक वाली उस लड़की को देखकर क्रोधित होकर उस दामाद को बँधवाया । उसने तो कुछ भी कर्तव्य-निर्णय में असमर्थ होकर बाँधे जाते हुए भी गूंगे की तरह कुछ भी नहीं कहा । इसके बाद क्रमशः सभी के जाग जाने पर और समाचार सुन लेने पर, सब समाचार जानने वाले उस चोर के वहाँ से हट जाने पर धीरे-धीरे रात बीत जाने पर वह वैश्यकुमार उस श्वसुर के द्वारा राजा के समीप लाया गया; और वह कटी हुई नाक वाली वसुदत्ता भी वहाँ आई । राजा ने सब

ततः ताभ्यां निर्बन्धतः परिपृष्टः पुस्तिकामुद्घाट्य मन्त्रमनुवाच्य मन्त्र-पूतानि जलानि तस्मिन् भस्मनि प्राक्षिपत्; क्षिप्तमात्रेषु जलेषु सा मन्दारवती जीवन्ती सहसा समुत्तस्थौ। तदा सा कन्या वह्निं प्रणम्य निष्क्रान्ता पूर्वाधिकद्युतिः काञ्चनेनेव निर्मितं वपुर्बभार। तादृशीं तां पुनर्जीवितां वीक्ष्य त्रयोऽपि ते स्मरातुराः तत्प्राप्त्यर्थमन्योऽन्यं कलहं चक्रुः। एकेनोक्तम्—'इयं मन्मन्त्रबलात् जीविता, तदेषा ममैव भार्या'। अपरोऽब्रवीत्,—'मदीयेन तीर्थभ्रमणपुण्येन इयं जीविता, तदेषा ममैव भार्य्या'। तृतीयेन अभिहितं,—'मया भस्मानि रक्षितानि, तत एवेयं जीविता, तस्मात् ममैवेयं प्रणयिनी' इति।

हे महीपते! तेषां विवादनिर्णये त्वमेव शक्तः; तत् ब्रूहि, कन्याऽसौ कस्य एतेषां भार्य्या भवितुमर्हति? यदि जानन् मृषा वदिष्यसि, तदा ते मूर्द्धा विदलिष्यति"। इति वेतालादाकर्ण्य स राजा एवम् अभ्यधात्' —यः क्लेशेन मन्त्रमानीय एनामजीवयत्, स खलु पितृकार्य्य-करणात् न पतिः। यश्च तस्या अस्थीनि गङ्गायां क्षेप्तुं गतः, स पुत्रकार्य्यकरणात् न पतिः। यस्तु तद्भस्मशय्यां समाश्लिष्य तपश्चचार

---

वह पुस्तिका खोल कर मन्त्र पढ़ कर मन्त्र से पवित्र जल उस भस्म के ऊपर छिड़क दिया। जल के छिड़कते ही वह मन्दारवती एकाएक जीवित होकर उठ गयी। तब वह कन्या अग्नि को प्रणाम कर के बाहर निकली। सोने से बनाये हुए की तरह उसका शरीर पहले से भी अधिक कान्तियुक्त हो गया। उस प्रकार की उसे फिर जीवित देख कर वे तीनों ब्राह्मणकुमार कामपीड़ित होकर उसकी प्राप्ति के लिये परस्पर कलह करने लगे। प्रथम ने कहा—"यह मेरे मन्त्र के बल से जीवित हुई है, इसलिये यह मेरी पत्नी होगी"। दूसरे ने कहा—"मेरे तीर्थ भ्रमण करने के पुण्य से यह जीवित हुई है, इस लिये यह मेरी पत्नी होगी"। तीसरे ने कहा—"मैंने इसकी भस्म सुरक्षित रक्खी, उसी से यह जीवित हुई है, इसलिये यह मेरी ही प्रियतमा होगी"।

हे महाराज! उनके विवाद का निर्णय करने में तूँही समर्थ हो। तो कहो उस कन्या को इनमें से किस की पत्नी होनी चाहिये? यदि जानते हुए भी मिथ्या कहोगे तो तुम्हारा शिर टुकड़े टुकड़े हो जायगा"। यह वचन वेताल से सुन कर उस राजा ने ऐसा कहा—"जिसने क्लेश से मन्त्र लाकर इसे जिलाया वह तो पिता का कार्य करने से पति नहीं हो सकता है। और जो उसकी अस्थियों को गङ्गा में फेंकने के लिये गया वह भी पुत्र का कार्य करने से पति नहीं हो सकता है। जो कि उसकी भस्म की शय्या का आलि-

सर्वं वृत्तान्तं श्रुत्वा अयं स्वदारद्रोहीति निर्णीय तस्य वणिक्सूनोर्वधं समादिशत्।

ततस्तस्मिन् निरपाधे न किमपि विजानति बणिक्सुते सडिण्डिमं वध्यभूमिं नीयमाने स चौरः समुपगम्य राजपुरुषानभाषत,—"अकारणमयं कथं वध्यभूमौ नीयते? यथावृत्तमहं सर्वं वेद्मि, मां राजान्तिकं नयत, सर्वमहं वदिष्यामि" इत्युक्तवन्तं तं ते सर्वे राजपुरुषा राजान्तिकमनयन्। स च चौरः आमूलात् सर्वं रात्रिवृत्तान्तं राज्ञे न्यवेदयत्, अब्रवीच्च,—"देव! न चेत् मद्वचसि तव प्रत्ययः, तत् सा नासा तस्य शवस्य मुखे अद्यैव निरीक्ष्यताम्"। तत् श्रुत्वा वीक्षितुं भृत्यान् प्रेष्य, तेषाञ्च मुखात् सत्यमवेत्य स राजा तं वणिक्पुत्रं वधदण्डात् विमुच्य, तां दुष्टां वसुदत्तां कर्णावपि छित्त्वा, देशात् निरवासयत्, तञ्च तत्पितरं वणिजं सर्वस्वमदण्डयत्; तुष्टश्च तं चौरं पुराध्यक्षमकरोच्च।

राजपुत्र! इत्थं निसर्गविषमाः शठा योषितः" इति वदन्नेव शुकः चित्ररथो नाम गन्धर्वराजो भूत्वा इन्द्रशापक्षयात् दिव्यरूपमास्थाय

---

वृत्तान्त सुनकर 'यह स्वपत्नीद्रोही है' ऐसा निर्णय करके उस वैश्यपुत्र के वध करने का आदेश दे दिया।

तब कुछ भी नहीं जानने वाले निरपराध उस वैश्यपुत्र के डुग्गी बजाते हुए वध्यभूमि में ले जाने पर उस चोर ने आकर राजपुरुषों से कहा—'बिना कारण ही इसे क्यों वध्यभूमि में ले जाते हो? जो समाचार हुआ है, मैं सब जानता हूँ, मुझे राजा के पास ले चलिये मैं सब कुछ बता दूँगा"। ऐसा कहने वाले उसको वे सभी राजपुरुष राजा के पास ले गये। उस चोर ने शुरू से लेकर सम्पूर्ण रात्रि का समाचार राजाको निवेदन कर दिया। और कहा—"महाराज! यदि मेरी बातों पर आपका विश्वास न हो तो वह कटी हुई नाक उस मृतक के मुँह में अभी-अभी देख ली जाय"। यह सुन कर देखने के लिये नौकरों को भेज कर और उनके मुख से "सच्ची बात है" ऐसा जानकर उस राजा ने उस वणिक्पुत्र को वधदण्ड से मुक्त करके उस दुष्टा वसुदत्ता को दोनों कान भी काट कर देश से निकाल बाहर किया। उसके पिता उस बनियाँ का दण्ड के रूप में सर्वस्वहरण कर लिया तथा सन्तुष्ट होकर उस चोर को नगराध्यक्ष बना दिया।

"हे राजकुमार! इस प्रकार, स्वभाव से ही कठोर तथा नीच होती हैं स्त्रियाँ"। इतना कहते ही वह सुग्गा चित्ररथ नामक गन्धर्वराज होकर इन्द्र

श्मशान एव, स एवास्याः प्रणयिकार्य्यकरणात् पतिर्भवितुमर्हति" इति।

इत्थं नृपात् त्रिविक्रमसेनादाकर्ण्य स वेतालस्तस्य स्कन्धादतर्कितं स्वपदं प्रायात्। राजा च भिक्षुकार्य्यार्थं पुनस्तं प्राप्तुं मनो बबन्ध; प्राणात्ययेऽपि महासत्त्वाः प्रतिपन्नमर्थम् असाधयित्वा न निवर्त्तन्ते।

---

ङ्गन कर के श्मशान में ही तपस्या करता रहा वही प्रेमी का कार्य करने से इसका पति हो सकता है"।

त्रिविक्रम सेन राजा से इस प्रकार का वचन सुन कर वह वेताल उसके कन्धे पर से अचानक अपने स्थान पर चला गया। राजा ने भी संन्यासी के कार्य के लिये फिर उसको प्राप्त करने का निश्चय किया। महासाहसी पुरुष प्राण के नष्ट होते रहने पर भी स्वीकार किये हुए कार्य को विना पूरा किये हुए रुकते नहीं।

दिवमगात्। सा च सारिका सपदि सुराङ्गना तिलोत्तमा भूत्वा तथैव क्षीणशापा दिवमुदपतत्। तयोस्तु तस्यां सभायां विवादो न निर्णीतः"।

इत्याख्याय स वेतालस्तं नृपमपृच्छत्,—"राजन्! वदतु भवान्, पापाः पुरुषाः? उतः योषितः? जानतस्ते अकथयतः शिरः खण्डशः पतिष्यति" इति। एतत् स्कन्धवर्त्तिनो वेतालस्य वचनमाकर्ण्य स भूपतिस्तं योगीश्वरं वेतालमवादीत्,—"वेताल! कोऽपि च तादृक् पुरुषः क्वचित् कदाचित् दुराचारः, स्त्रियस्तु प्रायशः पापा दृश्यन्ते, श्रूयन्ते च"। इत्युक्तवतो नृपस्य स्कन्धात् प्राग्वत् स वेतालः क्वापि प्रणष्टोऽभूत्। राजा च पुनस्तदानयने यत्नमकरोत्।

---

के शाप के समाप्त हो जाने से स्वर्गीय रूप धारण कर के स्वर्ग चला गया। और वह मैना भी उसी समय तिलोत्तमा नामक अप्सरा होकर उसी प्रकार शापमुक्त होने से आकाश में उड़ गयी। उन दोनों के विवाद का निर्णय उस सभा में नहीं हो सका।

इतना कहकर वेताल ने उस राजा से पूछा—"महाराज आप कहिये कि—पुरुष पापी होते हैं? अथवा स्त्रियाँ? जानते रहने पर भी यदि नहीं कहियेगा तो आपका शिर टुकड़े-टुकड़े होकर गिर जायगा"। कन्धे पर रहने वाले उस वेताल का यह वचन सुन कर उस राजा ने उस योगिराज वेताल को कहा—"वेताल! कोई उस प्रकार का पुरुष कहीं किसी समय दुराचारी होता है; स्त्रियाँ तो प्रायः पापिनी देखी ही जाती हैं और सुनी ही जाती हैं"। यह कहने वाले उस राजा के कन्धे पर से पहले की तरह वह वेताल कहीं अदृश्य हो गया। और राजा फिर उसके लाने का यत्न करने लगे।



# अथ तृतीयकथा

अथ राजा पुनरपि तं वेतालमानेतुं तं शिंशपातरुमभ्यगच्छत्, प्राप्य च तत्रस्थं मृतदेहगतं तं स्कन्धे गृहीत्वैव तूष्णीं गन्तुं प्रावर्त्तत। अथ प्रयान्तं तं स वेतालः पुनरवोचत्,—"राजन्! निशि गमागमं कुर्वन् नितरां खिद्यसे, अतस्त्वां विनोदयन् पुनः कथां वर्णयामि, शृणु,—

अस्ति पाटलिपुत्रं नाम भूमण्डलख्यातं नगरम्। पुराऽऽसीत् तत्र नृपतिः विक्रमकेशरी नाम, यं गुणानामिव रत्नानामाश्रयं विधिर्व्यधात्। तस्य विदग्धचूडामणिर्नाम दिव्यविज्ञानवान् सर्वशास्त्रवित् शापावतीर्ण एकः शुक आसीत्। तस्य नृपस्य आत्मजः शशी नाम शुकोपदेशेन मगधदेशनृपतिकन्यां चन्द्रप्रभां नाम उपयेमे। तस्या अपि राजपुत्र्याः तथाभूता ज्ञानविज्ञानशालिनी सोमिका नाम शारिकाऽभूत्; अथ तौ शारिकाशुकौ एकपञ्जरस्थौ राजवेश्मनि आस्ताम्।

---

## तृतीयकथा

इसके बाद राजा फिर भी उस वेताल को लाने के लिये उस शीशम के पेड़ के पास गया और मृत शरीर में स्थित उस वेताल को प्राप्त करके कन्धे पर रखते ही चुपचाप चलना प्रारम्भ कर दिया। इसके बाद जाते हुए उस राजा को उस वेताल ने फिर कहा—"महाराज! रात में यातायात करते हुए अत्यन्त क्लेशित हो रहे हो, इसलिये तुम्हारा मनोरञ्जन करते हुए फिर कहानी कहता हूँ, सुनो—

भूमण्डल में प्रसिद्ध पाटलिपुत्र ( पटना ) नाम का नगर है। प्राचीन काल में वहाँ विक्रमकेशरी नामक राजा था, जिसको विधाता ने गुणों के समान ही रत्नों का आश्रय बनाया था। उसका विदग्धचूड़ामणि नाम वाला अलौकिक विज्ञान जानने वाला सभी शास्त्रों का ज्ञाता शाप से अवतार लिये हुए एक सुग्गा था। उस राजा के शशि नामक पुत्र ने सुग्गे के उपदेश से मगध देश के राजा की पुत्री चन्द्रप्रभा से विवाह किया। उस राजकुमारी की भी उसी प्रकार की ज्ञान से भरी हुई सोमिका नाम की मैना थी। विवाह के पश्चात् वे दोनों सुग्गा और मैना एक ही पिंजड़े में स्थित होकर राजभवन में रहने लगे।

# अथ चतुर्थकथा

ततः स त्रिविक्रमसेनो नृपतिः पुनस्तस्य शिंशपातरोर्मूलं गत्वा निशि तं मुक्ताट्टहासं शवाधिष्ठितं वेतालं प्राप्य निष्कम्पः तथैव स्कन्धमारोप्य तस्य भिक्षोः सकाशमुदचलत्। तञ्च चलन्तम् अंसस्थः स वेतालः पुनरब्रवीत्,—"राजन् ! दुराचारस्य अस्य भिक्षोः कृते कोऽयं ते प्रयासः ? निष्फले अमुष्मिन् प्रयत्ने तव विवेको न दृश्यते; यद् भवतु, त्वद्भक्त्या तवाध्वश्रमविनोदिनीमपरामेकां कथां कथयामि, श्रूयताम् ,—

अस्ति शोभावती नाम यथार्थनाम्नी काऽपि नगरी, तस्यामभूत् शूद्रको नाम प्रभूतपराक्रमो महाप्रतापो नृपतिः। यस्य जयिनः प्रतापानलोऽनवरतं बन्दीकृतारिवनिताधूतचामरमारुतैः ज्वलति स्म। येन च अलुप्तधर्मचरणा स्फीता वसुन्धरा रामादीनपि भूपतीन् विसस्मार।

---

## चौथी कथा

इसके बाद वह त्रिविक्रम सेन राजा फिर उस शीशम के पेड़ की जड़ में जाकर रात में मृतक पर आरूढ़ जोरों से हँसते हुए उस वेताल को प्राप्त करके निडर होकर उसी प्रकार कन्धे पर उठा कर उस बौद्ध संन्यासी के पास चल पड़ा। उस चलते हुए राजा के कन्धे पर स्थित वह वेताल फिर कहने लगा—"महाराज ! इस दुराचारी संन्यासी के लिये यह कौन सा तुम्हारा प्रयास है ? इस निरर्थक प्रयत्न में तुम्हारा ज्ञान नहीं दिखाई पड़ता है। जो कुछ होवे, तुम्हारी भक्ति से तुम्हारे रास्ते के परिश्रम को दूर करने वाली एक दूसरी कथा कहता हूँ, सुनो—

शोभावती नाम की सार्थक नामवाली कोई नगरी है। उसमें अत्यन्त पराक्रमी महाप्रतापी शूद्रक नाम का राजा था। जिस विजयी राजा का प्रताप रूपी आग बन्दी की गई शत्रु की पत्नी के द्वारा धारण किये हुए चामर की हवासे सतत प्रज्वलित होती थी। जिस राजा के द्वारा सञ्चालित धर्माचरण वाली समृद्धिशालिनी पृथ्वी राम आदि राजाओं को भी भूल गयी।

एकदा साभिलाषः स शुकस्तां शारिकामब्रवीत्,—"सुभगे ! एकशय्याऽऽसनाऽहारविहारेषु मां भज" इति। शारिकाऽब्रवीत्—"नाहं पुरुषसंसर्गं कर्त्तुमिच्छामि, यतः पुरुषा दुष्टाः कृतघ्नाश्च" इति। ततः शुकेन,—"न पुमांसो दुष्टाः, स्त्रिय एव दुष्टाः नृशंश हृदयाश्च" इति कथिते तयोर्विवादः समजनि। ततस्तौ पक्षिणौ क्रीतदासत्वक्रीतदासी-त्वपणं कृत्वा परस्परं विवादनिष्पत्तये राजपुत्रमुपेयतुः। स राजपुत्रः पितुः अस्थानगतः विवादपदं श्रुत्वा,—"कथं पुरुषाः कृतघ्नाः, ब्रूहि तत् त्वम्" इति शारिकामपृच्छत्। ततः सा,—"शृणोतु राजपुत्रः" इति समाख्याय स्वपक्षसमर्थनाय पुंदोषाख्यायिनीं कथां कथयितुमु-पचक्रमे।—

"अस्ति कामन्दकी नाम विख्याता नगरी; तस्याम् अर्थदत्तो नाम महाधनो वणिक् प्रतिवसति स्म। कालेन तस्य धनदत्तो नाम तनयः समुदपद्यत। अथ पितरि स्वर्गते स युवा द्यूतादिसङ्गेन भृशमुच्छृङ्खलोऽ-भवत्; धूर्त्ताश्च मिलिताः तं सर्वथा प्राभ्रंशयन्। दुर्जनसङ्गतिरेव व्यसनवृक्षस्य मूलम्। अचिरेण च व्यसनाऽऽसक्ततया क्षीणसर्वस्वः,

---

एक दिन वासना से युक्त होकर सुग्गे ने उस मैना को कहा—"हे सुन्दरि ! एक शय्यापर शयन करना, एक आसन पर बैठना, एक साथ भोजन करना, साथ-साथ विहार करना आदि कार्यों में मेरा साथ दो"। मैना ने कहा—"मैं पुरुष का सम्पर्क नहीं करना चाहती हूँ; क्यों कि पुरुष दुष्ट तथा कृतघ्न होते हैं।" तब सुग्गे के द्वारा "पुरुष दुष्ट नहीं होते हैं, स्त्रियां ही दुष्ट तथा क्रूर हृदयवाली होती हैं" यह कहे जाने पर उन दोनों में विवाद होने लगा। तब वे दोनों पक्षी आपस में खरीदा हुआ दास होने की तथा खरीदी हुई दासी होने की बाजी लगा कर विवाद का निर्णय करने के लिये राजकुमार के पास पहुँचे। पिता की सभा में बैठे उस राजकुमार ने विवाद का विषय सुनकर—"कैसे पुरुष कृतघ्न होते हैं ? यह तुम कहो" यह मैना से कहा। इसके बाद उस मैना ने—"राजकुमार सुनें" यह कह कर पुरुषों का दोष बताने वाली अतएव अपने पक्ष का समर्थन करने वाली कहानी कहना प्रारम्भ किया।—

"कामन्दकी नाम की प्रसिद्ध नगरी है। उस में अर्थदत्त नाम का महाधनवान् बनियां रहता था। कुछ दिनों के बाद उसका धनदत्त नाम का पुत्र उत्पन्न हुआ। अनन्तर पिता के स्वर्ग चले जाने पर वह युवक जूआ आदि की आसक्ति से अत्यन्त उद्दण्ड हो गया। धूर्त लोगों ने मिल कर उसे सब प्रकार से गिरा दिया। दुर्जनों की सङ्गति ही विपत्तिरूपी वृक्ष की जड़ है।

कदाचित् तं महीपालं प्रियशूरं सेवितुं मालवात् कश्चित् वीरवरो नाम क्षत्रियः समागात्; तस्य धर्मवती नाम भार्य्या, शक्तिधरो नाम सुतः, वीरवती नाम्नी कन्या आसीत्। सेवापरिच्छदस्तस्य त्रयमेव, कट्यां कृपाणिका, करे तरवारिः, अपरे च करे चर्म; एतावन्मात्रपरिच्छदपरीवारः स प्रत्यहं तं राजानं दीनारशतपञ्चकं वेतनं प्रार्थयामास। राजा च तम् आकारसूचितोदारपौरुषं मत्वा, तस्मै यथेप्सितां वृत्तिं ददाति स्म, स्थापयति स्म च कौतुकात् प्रच्छन्नं चारान् तत्पृष्ठतः 'किमेभिः प्रभूतैर्वेतनैरेष करोति?' इत्यन्वेष्टुम्।

स च वीरवरः प्रातः राजदर्शनं कृत्वा, मध्याह्ने धृतायुधः तस्य सिंहद्वारे स्थित्वा च स्ववृत्तिलब्धानां दीनाराणां शतं गार्हस्थ्यनिर्वाहाय भार्य्यायाः हस्ते प्रादात्; अपरेण च शतेन वस्त्रम् अङ्गरागं ताम्बूलादीनि च क्रीणाति स्म; अपरञ्च शतं स्नात्वा विष्णोः शिवस्य च पूजार्थं विनियुयोज; अन्यच्च शतद्वयं विप्रेभ्यः दरिद्रेभ्यश्च प्रादात्। एवं विभज्य प्रत्यहं तानि पञ्चशतानि स व्ययीचकार। ततश्च अग्निकार्यादिकं विधाय भुक्त्वा च निशि एकाकी तदेव सिंहद्वारं धृतकृपाण-

---

किसी समय वीरों के प्रेमी उस महाराज की सेवा करने के लिये मालव देश से कोई वीरवर नाम का क्षत्रिय आया। उसको धर्मवती नाम की पत्नी, शक्तिधर नाम का पुत्र और वीरवती नाम की कन्या थी। सेवा करने के साधन उसके तीन ही थे; कमर में कटार, हाथ में तलवार और दूसरे हाथ में ढाल। इतने मात्र साधन से संयुक्त होने पर भी उसने उस राजा से पाँच सौ अशर्फियां प्रत्येक दिन का वेतन मांगा। राजा ने भी आकृति से ही उसको अत्यन्त पराक्रमी समझ कर उसकी इच्छा के अनुसार ही वेतन दिया। और कुतूहलवश चुपचाप गुप्तचरों को 'इतने अधिक वेतन से यह क्या करता है?' यह पता लगाने के लिये उसके पीछे लगा दिया।

और वह वीरवर प्रातः काल राजा का दर्शन कर के दोपहर में अस्त्र धारण किये हुए उसके सिंहद्वार पर रह कर अपने वेतन में प्राप्त हुयी अशर्फियों में से एक सौ गृहस्थाश्रम निर्वाह के लिये पत्नी के हाथ में देता था द्वितीय सौ अशर्फी से वस्त्र, अङ्गराग, ताम्बूल आदि खरीदता था। तृतीय सौ अशर्फी स्नान कर के विष्णु तथा शिव की पूजा के लिये खर्च करता था। अवशिष्ट दो सौ अशर्फी ब्राह्मणों को और दरिद्रों को देता था। इस प्रकार विभाग करके वह पाँचो सौ अशर्फियों को प्रतिदिन खर्च कर देता था। इस के बाद होम आदि कर के और भोजन करके प्रतिदिन रात में अकेले ढाल-

दारिद्रय ेण च लज्जितः स्वदेशं त्यक्त्वा भ्रमितुं देशान्तराणि समाश्रयत्, गच्छंश्च चन्दनपुरं नाम नगरमाससाद, विवेश च भोजनार्थी कस्यापि वणिजः सदनम। स च वणिक् कुमारं दृष्ट्वा, पृष्ट्वा च कुलं, ज्ञात्वा च कुलीनं, सत्कृत्य च, दैवयोगात् प्राप्तममन्यत, अददाच्च तस्मै सधनां रत्नवतीं नाम सुताम्। ततः स धनदत्तः कृतविवाहस्तस्मिन्नेव श्वशुर-वेश्मनि तस्थौ।

गच्छत्सु च दिनेषु सुखेन विस्मृतदुर्गतिः पुनर्व्यसनोत्सुकः स्वदेशं गन्तुकामोऽभवत्। ततः स शठः कथमपि श्वशुरं तं तन्मात्रापत्यम् अनुनीय, तामलङ्कृतां भार्यां रत्नवतीमेकया वृद्धया स्त्रिया सहितां गृहीत्वा स्वदेशाय प्रतस्थे। क्रमेण अटवीं प्राप्य दूरात् तस्करभयमुक्त्वा तस्या भार्य्यायाः सर्वाणि अलङ्करणानि स्वीचकार। पश्यतु युवराजः, द्यूताऽऽवेशादिव्यसनिनां कृतघ्नानां हृदयं निस्त्रिंशकर्कशम्। स च पापात्मा अर्थार्थं तां गुणवतीमपि भर्य्यां हन्तुं तया वृद्धया युतां क्वापि श्वभ्रे न्यक्षिपत्। क्षिप्त्वैव तस्मिन् प्रस्थिते दुरात्मनि सा वृद्धा तस्मिन्नेव

---

बुरी आदतों में आसक्त होने से कुछ ही दिनों में सर्वस्व नष्ट हो जाने पर दरिद्रता से लज्जित होकर अपना देश छोड़ कर भ्रमण करने के लिये दूसरे देशों का उसने आश्रय लिया। जाते-जाते उसने किसी चन्दनपुर नामक नगर को प्राप्त किया तथा भोजन के लिये किसी बनिये के घर में प्रवेश किया। उस बनिया ने अविवाहित देख कर उसका कुल पूछ कर तथा कुलीन जान कर सत्कार कर के भाग्य संयोग से ही इसे पहुँचा हुआ समझा और उसको धन से संयुक्त की हुई रत्नवती नाम की पुत्री दे दी। तब वह धनदत्त विवाह करके श्वशुर के ही उसी मकान में रहने लगा।

कुछ समय बीतने पर सुख से वह अपनी दुर्गतियों को भूल गया तथा दुराचरण के लिये उत्सुक होकर अपने देश को जाने का इच्छुक हुआ। तब उस धूर्त ने एक मात्र उस सन्तान वाले अपने उस श्वशुर को अनुनय विनय के द्वारा मनाकर अलङ्कारों से सुसज्जित उस पत्नी रत्नवती को एक वृद्धा स्त्री के सहित लेकर अपने देश के लिये प्रस्थान किया। क्रमशः घोर जङ्गल में पहुँच कर दूर से ही चोरों का भय कह कर उस पत्नी के सभी आभूषणों को ले लिया। देखें युवराज! जूआ, वेश्या आदि दुराचरण वाले कृतघ्नों का हृदय तलवार की तरह कठोर होता है। उस पापी ने धन के लिये उस गुणवती पत्नी को भी मारने के लिये उस वृद्धा के साथ किसी खाई में ढकेल दिया। ढकेल कर उस दुष्ट के चले जाने पर वह वृद्धा तो उसी

चर्मा प्रत्यहं तस्थौ। एतत् सर्वं चारमुखात् श्रुत्वा राजा शूद्रकः भृशं तुतोष, निवारयामास च तान् चारान् पुनस्तस्य मार्गणे; मेने च विशेषपूजार्हं तं पुरुषातिशयम्।

अथ गच्छत्सु दिनेषु एकदा धारावर्षिणि दिवानिशं जलद-पटले गगनमावृण्वति, जनरहिते च समन्तात् राजमार्गे, एकाकी स वीरवरस्तस्मिन् सिंहद्वारे एवातिष्ठत्। स च राजा दिनपतावस्तं गते तादृशे भीषणे तमसि विजृम्भिते सधारावर्षे, तस्य वीरवरस्य भावं जिज्ञासुः निशि प्रासादाग्रमारुह्य जगाद,—"कोऽत्र सिंहद्वारि स्थितः ?" इति। तदाकर्ण्य,—"अहमेव स्थितः" इति वीरवरः प्रत्यवादीत्। "अहो ! महासत्त्वोऽयं वीरवरः मद्भक्तः, तदेष मया अवश्यमेव महत् पदं प्रापणीयः" इति सञ्चिन्त्य राजा प्रासादादवतीर्य्य अन्तःपुरं प्रविश्य शयनमगात्।

अन्येद्युश्च तथैव मेघेषु धाराऽऽसारान् वर्षत्सु निशायां, भुवने कालतमसि विजृम्भिते, राजा पुनश्च तद्भावं जिज्ञासुः प्रासादमधिरुह्य सिंहद्वारमभि—"कोऽत्र स्थितः ?" इति व्याजहार। वीरवरेण च,—

---

तलवार ले कर उसी सिंहद्वार पर रहता था। गुप्तचरों के मुख से यह सब सुन कर राजा शूद्रक अत्यन्त सन्तुष्ट हुआ और फिर उस का पीछा करने के विषय में उन गुप्तचरों को रोक दिया। तथा उस विशिष्ट पुरुष को विशेष पूजा के योग्य समझने लगा।

इस के बाद कुछ समय बीत जाने पर एकबार रातदिन झरी लगा कर बरसने वाले बादलों के आकाश घेर लेने पर और सब जगह राजमार्ग के जनशून्य हो जाने पर अकेला ही वह वीरवर उस सिंहद्वार पर खड़ा था। उस राजा ने सूर्य के अस्त हो जाने पर, उस प्रकार के भयङ्कर जलधारा वर्षासहित अन्धकार के फैल जाने पर वीरवर की स्वामिभक्ति जानने का इच्छुक हो कर रात में कोठे के ऊपर चढ़ कर कहा—"इस सिंहद्वार पर कौन खड़ा है ?" यह सुन कर—"मैं ही खड़ा हूँ" यह वीरवर ने उत्तर दिया। "अरे ! यह वीरवर महासाहसी तथा मेरा भक्त है, तो यह मेरे द्वारा ऊँचा पद प्राप्त कराने योग्य है" यह सोच कर राजा महल के ऊपर से उतर कर रनिवास में प्रवेश करके बिस्तरे पर चला गया।

और दूसरे दिन उसी प्रकार झरी लगा कर मेघों के बरसते रहने पर रात में काले अन्धकार के भुवन भर फैल जाने पर राजा ने फिर उसकी स्वामि-भक्ति की परीक्षा लेने के लिये महल के ऊपर चढ़ कर सिंहद्वार की ओर—

व्यपद्यत; सा तु रत्नवती कथञ्चित् तत्र तृणगुल्मादिकमालम्ब्य करुणं क्रोशन्ती सशेषत्वादायुषः समुत्थिता, विक्षताङ्गी पदे पदे मार्गं पृष्ट्वा, यथाऽऽगतेनैव पथा कृच्छ्रात् पितुः सदनमागमत्।

"कथमकस्मात् त्वमीदृशी प्रत्यावृत्ता ?" इति ससम्भ्रमं माता पित्रा च पृष्टा सा साध्वी एवमभाषत,—"मुषिताः स्म पथि तस्करैः, नीतश्च बलात् स मे पतिः, वृद्धा सा श्वभ्रे निपत्य मृता, अहं पुनर्दैवात् प्राणिमि। केनचित् कृपालुना पथिकेनाहमुद्धृता श्वभ्रात्"। एवमुक्तवती माता पित्रा च शोचता समाश्वासिता सा भर्त्तृप्राणा रत्नवती तस्थौ।

अथ कालेनासौ धनदत्तः द्यूतेन क्षपितसर्वधनः पुनरचिन्तयत्,—"गच्छामि, पुनः श्वशुरगृहात् धनमानयामि, तत्र गत्वा तं श्वशुरं 'गृहे स्थिता कुशलिनी तव दुहिता' इति वक्ष्यामि"। इति स मनसि सङ्कल्प्य श्वशुरसदनं पुनरवाप। आगतञ्च तं दूरात् सा पतिप्राणा भार्य्या अद्राक्षीत्, दृष्ट्वैव धावित्वा च सा तस्य पापस्य पादयोर्निपत्य तत् सर्वं पितृभ्यां मृषा निवेदितं व्यजिज्ञपत्; दुष्टेऽपि पत्यौ साध्वीनां मानसं

---

में मर गयी। वह रत्नवती तो किसी प्रकार उसमें घास लता आदि पकड़ कर करुण स्वर से रोती हुई आयु के शेष रहने से बाहर निकल गयी। आघात से छिन्न-भिन्न शरीरवाली पग-पग पर रास्ता पूछ कर जैसे आई थी उसी रास्ते से बहुत मुश्किल से पिता के घर आ गयी।

"कैसे एकाएक तुम इस प्रकार लौट आई हो ?" यह, घबड़ाहट के साथ माता पिता के द्वारा पूछी गई उस पतिव्रता ने इस प्रकार कहा—"रास्ते में हम लोग चोरों द्वारा लूट लिये गये। मेरे पति को बलपूर्वक पकड़ कर वे लोग ले गये। वह वृद्धा खड्ढे में गिर कर मर गयी। मैं तो दैव संयोग से जी रही हूँ, किसी दयालु पथिक के द्वारा मैं खड्ढे से निकाली गयी हूँ"। ऐसा कहने वाली वह पतिव्रता रत्नवती शोक करने वाले माता पिता के द्वारा आश्वासित होकर रहने लगी।

कुछ समय के बाद धनदत्त ने जूआ में सब धन हार कर फिर सोचा—"जाता हूँ, फिर श्वशुर के घर से धन ले आता हूँ, वहाँ जाकर उस श्वशुर को 'घर में निवास करती हुई तुम्हारी पुत्री कुशल है' यह कहूँगा"। ऐसा उसने मन ही मन निश्चय कर के श्वशुर के घर पर पुनः उपस्थित हुआ। उस पतिव्रता पत्नी ने उसको दूर से ही आते हुये देख लिया, देखते ही दौड़ कर उसने उस पापी के पैरों पर गिर कर माता पिता को जो उसने झूठ बना कर कहा था वह सब बता दिया। पति के दुष्ट होने पर भी पति-

"अहं स्थितो देव !" इति प्रोक्ते स राजा भृशं विसिष्मिये, शुश्राव च तावदतिदूरे सहसा रुदतीं कामपि स्त्रियं वामस्वरेण; व्यचिन्तयच्च,—"केयं विषादविकलेव सप्रलापकरुणं विरौति ? राष्ट्रे च मम पराभवः नास्ति, न दरिद्रः, नापि कश्चित् दुःखितः, तदेषा का ?" इति । आदिदेश च करुणार्द्रचेताः तं वीरवरमधःस्थितं,—"भो वीरवर ! शृणु, एषा दूरे काऽपि रोदिति, किमर्थमसौ रोदिति, का चेयम् ? त्वया गत्वा एतत् निरूप्यताम्" इति ।

तदाकर्ण्य स वीरवरः "तथा" इत्युक्त्वा निबद्धासिधेनुः करतल-धृतकरवालश्च गन्तुं प्रावर्त्तत, नागणयत् तत् स्थूलधाराशिलावर्षि ज्वलद्विद्युद्विलोचनं नवमेघान्धकारम् । तञ्च तादृश्यां निशायां प्रस्थित-मेकाकिनं दृष्ट्वा करुणाकौतुकाऽऽविष्टो राजा प्रासादादवतीर्य्य गृहीतासिरेकाकी अनुपलक्षितः तमनुजगाम ।

सच वीरवरः रुदितमनुसरन् नगर्य्या वहिः सरोवरमेकं प्राप, ददर्श च तत्र,—"हा शूर ! हा कृपालो ! हा वदान्य ! त्वया शून्या

---

"कौन यहाँ है ?" यह कहा और वीरवर के द्वारा—"मैं हूँ महाराज ।" यह कहे जाने पर वह राजा अत्यन्त आश्चर्यित हुआ । उसी समय एकाएक अति दूर में करुण स्वर में रोती हुई किसी स्त्री को रुलाई सुनाई पड़ी । और राजा सोचने लगा—"विषाद से व्याकुल की तरह यह कौन है ? जो कि करुण स्वर में विलाप करती हुई रोती है । मेरे राष्ट्र में कोई किसी को पीड़ा नहीं देता है, न तो कोई दरिद्र या दुःखी ही है । तो यह कौन है ?" फिर दया से आर्द्रचित्त होकर नीचे खड़े हुए वीरवर को आदेश दिया—"हे वीरवर ! सुनो, यह दूर में कोई रोती है । किसलिये यह रोती है और यह कौन है ? तुम जाकर यह पता लगाओ ।

यह सुन कर वह वीरवर "जैसी आज्ञा" यह कह कमर में कटार बाँध कर, हाथ में तलवार लेकर चल दिया । उस सघन जलधारा तथा ओले बरसने वाले, प्रज्वलित विद्युल्लता की आँख वाले नवीन मेघों के अन्धकार की उसने गणना नहीं की । उस प्रकार की रात में उसको अकेले गये हुए देख कर दया और कुतूहल से भरे हुए उस राजाने महल से उतर कर तलवार लेकर अकेले ही अलक्षित हो कर उस का अनुसरण किया ।

वह वीरवर रोदन का अनुसरण करते हुए नगर से बाहर एक सरोवर के पास पहुँचा और वहाँ उसने देखा—"हा वीर ! हा कृपालु ! हा दानी !

नान्यथावृत्ति भवति। ततः स दुरात्मा निर्भयः श्वाशुरं गृहं प्रविश्य तं पादयोः प्रणनाम। स च तं जामातरं दृष्ट्वा अभ्यनन्दत्, अकरोच्च दिष्ट्याऽयं मे जामाता जीवन् चौरैर्मुक्तइति बन्धुभिः सह महोत्सवम्। ततः स धनदत्तः सुखेन श्वाशुरीं समृद्धिं भुञ्जानः तया रत्नवत्या पत्न्या सह रेमे।

एकदा स पापीयान् रात्रौ यच्चकार, तत् अवाच्यमपि कथाभङ्ग-भयात् कथ्यते, शृणु राजपुत्र! असौ पापमतिः विश्वस्तसुप्तां तां रत्नवतीं निशि हत्वा तदाभरणसञ्चयम् अपहृत्य अलक्षितः स्वदेशं प्रायात्। ईदृशाः पुरुषाः पापाः कृतघ्नाः"। इति शारिकया कथिते राजपुत्रः हसन्,—"त्वमिदानीं वद" इति शुकमभाषत। ततः स शुकः प्राब्रवीत्,—"देव! स्त्रियः विषमसाहसाः दुश्चरिताः पापाश्च; तथा चात्र कथामेकां वर्णयामि, शृणोतु कुमारः,—

अस्ति हर्षवती नाम नगरी। तत्राभूत् धर्मदत्तो नाम बहुकोटीश्वरो वणिजामग्रणीः; तस्य वसुदत्ता नाम्नी रूपेण असामान्या प्राणेभ्योऽपि

---

व्रताओं का मन अनुचित आचरण वाला नहीं होता है। तब उस दुष्ट ने निर्भय होकर श्वशुर के घर में प्रवेश करके उसके पैरों पर प्रणाम किया। उसने तो उस दामाद को देख कर स्वागत किया और 'भाग्य से मेरे यह दामाद चोरों के द्वारा जीवित ही छोड़ दिये गये'—इसलिये बन्धुओं के साथ मिल कर बहुत बड़ा उत्सव किया। तब वह धनदत्त सुखपूर्वक श्वशुर की समृद्धि का उपभोग करते हुए उस रत्नवती पत्नी के साथ रमण करने लगा।

एकबार उस पापी ने रात में जो किया वह अवक्तव्य होने पर भी कथा भङ्ग होने के भय से कहती हूँ सुनो—हे राजकुमार! उस पापबुद्धि ने रात में विश्वासपूर्वक सोई उस रत्नवती की हत्या कर के उसके आभूषणों को लेकर छिप कर अपने देश को चला गया। इस प्रकार पुरुष पापी तथा कृतघ्न होते हैं"। यह मैना के द्वारा कहे जाने पर हँसते हुये राजकुमार ने "अब तुम कहो" यह सुग्गे को कहा। तब उस सुग्गे ने कहा—"स्वामी! स्त्रियाँ तो कठोर साहस वाली, दुश्चरित्र तथा पापिनी होती हैं; उसी प्रकार की एक कहानी कहता हूँ, राजकुमार सुनें—

हर्षवती नाम की एक नगरी है। वहाँ धर्मदत्त नाम का अनेक करोड़ की सम्पत्ति वाला प्रधान बनियाँ रहता था। उसकी विशेष सौन्दर्यवाली

कथमहं वत्स्यामि ?" इत्येवं रुदतीं वारिमध्यवर्त्तिनीं कामपि स्त्रियम्। स च वीरवरः,—"का त्वम् ? कथं वा रोदिषि ?" इति विस्मितः सचकितमपृच्छत्। सा अभ्यधात्,—"भो वीरवर ! मां पृथिवीं जानीहि, अस्याश्च मम इदानीं धार्मिकः शूद्रको नाम राजा भर्त्ता; इतश्च तृतीये दिने तस्य राज्ञो मृत्युर्भविष्यति, तादृशमन्यं पतिं कथमवाप्नुयामिति शोकेन विधुराऽहं शोचामि" इति।

एतदाकर्ण्य स वीरवरस्त्रस्त इव तामब्रवीत्,—"देवि ! अस्ति कश्चिदस्य प्रतीकारः ? येनास्य जगत्प्रभो रक्षा स्यात् ?" इति। तस्य वचनमाकर्ण्य सा वसुमती प्रत्यभाषत,—"वत्स ! एक एवास्त्युपायः, कर्त्तुञ्च शक्तो भवान्" इति। वीरवरोऽवदत्,—देवि ! तद्वद द्रुतं, यावत् शीघ्रं तत् साधयामि ! अन्यथा कोऽर्थः प्राणैरस्माकम् ?"। तदाकर्ण्य धरित्री प्राब्रवीत्,—"वत्स ! त्वदन्यः कः प्रवरः स्वामिभक्तः ? तदस्य उपायं शृणु,—अस्य राजकुलस्यान्तिके राज्ञाऽनेन प्रतिष्ठापिता देवी चण्डिकाऽस्ति; तस्यै चेत् सत्वरं पुत्रमुपहारीकरोषि, तदा एष राजा न म्रियेत, अन्यत् शतं समा जीवेत्। अद्यैव चेत् भवता एतत् क्रियते, तदैव शिवं, नान्यथा" इति। पृथिव्या

---

तुमसे शून्य हो कर कैसे मैं रहूँगी ?" इस प्रकार रोती हुई पानी में स्थित किसी स्त्री को। उस वीरवर ने घबड़ा कर तथा आश्चर्यित हो कर—"तुम कौन हो ? तथा क्यों रोती हो ?" यह पूछा। उसने कहा—"हे वीरवर ! मुझे पृथ्वी समझो, मुझ पृथ्वी का इस समय धार्मिक राजा शूद्रक पति है। आज से तीसरे दिन उस राजा की मृत्यु होगी, 'उस प्रकार का अन्य पति कैसे प्राप्त करूँगी' इस शोक से व्याकुल हो कर मैं रो रही हूँ"।

यह सुनकर उस वीरवर ने भयभीत हो कर उससे कहा—"हे देवि ! इसका कोई प्रतिकार है ? जिससे इस राजा की रक्षा हो ? उसका वचन सुन कर उस पृथ्वी ने प्रत्युत्तर दिया—"वत्स एक ही उपाय है और तुम कर सकते हो"। वीरवर ने कहा—"देवि ! वह शीघ्र कहो, जिससे शीघ्र उसे करूँ, नहीं तो हमारे प्राणों का क्या प्रयोजन है ?" यह सुनकर पृथ्वी ने कहा—"पुत्र ! तुमसे अन्य कौन श्रेष्ठ स्वामिभक्त है ? तो इसका उपाय सुनो—इस राजभवन के समीप में इसी राजा के द्वारा स्थापित की हुई चण्डिका देवी हैं, उन्हीं को अगर शीघ्र ही अपना पुत्र बलिदान कर भेंट दे देते हो तो यह राजा नहीं मरेगा, इससे आगे सौ वर्ष जीवेगा। आज ही अगर तुम यह करते हो तभी कल्याण होगा, नहीं तो नहीं" पृथ्वी के द्वारा इस प्रकार

तथाऽभिहितः स वीरो वीरवरस्तदा,—"यासि देवि ! करोमि अधुनैव एतत्" इति प्रत्यवादीत्। वसुन्धरा च,—"भद्रं तेऽस्तु" इत्यभिधाय तिरोदधे। गुप्तमनुसृतः स राजा तत् सर्वं शुश्राव।

ततश्च गूढे तस्मिन् राजनि तद्भावं जिज्ञासमाने गच्छति स वीरवरस्त्वरितं गृहमगात्, आगत्य च तत्र पत्नीं धर्मवतीं विबोध्य तत् सर्वं वसुन्धराप्रोक्तमर्थं प्राब्रवीत्। साऽपि तदाकर्ण्य तं स्वामिनम् आह स्म,—"प्रभो ! शिवं भाव्यं चेत्, तदा शिशुमेनं प्रबोध्य भवानेव ब्रवीतु"। ततः स वीरवरस्तं सुतं बालं सुप्तं प्राबोध्य वृत्तान्तमाख्याय समवोचत्,—"पुत्र ! त्वयि चण्डिकादेव्या उपहारीकृते राजाऽसौ जीवति, नो चेत् तृतीयेऽह्नि विपत्स्यते"। तदाकर्ण्य बालोऽपि यथार्थं नाम दर्शयन् अकातरचित्तः सत्वरं पितरमवदत्,—"तात! यदि राजा मम प्राणैर्जीवेत्, तदाऽहं कृतार्थः, भुक्तस्य च तदन्नस्य परा निष्कृतिः प्रदत्ता स्यात्, तत किं विलम्बयते? शीघ्रं मां नीत्वा भगवत्या उपहारीकुरुष्व, मज्जीवनेन राज्ञोऽमङ्गलशान्तिर्भवतु"। इति तेनोक्तो वीरवरः सहर्षं,—"साधु! सत्यं त्वं मत्पुत्रः" इति तमभ्यनन्दयत्। तस्य भार्य्या

---

कहा हुआ उस वीर वीरवर ने उस समय—"हे देवि ! जाता हूँ, इसी समय यह करता हूँ" यह जवाब दिया। पृथ्वी भी—"तुम्हारा कल्याण होवे" यह कह कर अन्तर्धान हो गयी। छिप कर अनुसरण करते हुए उस राजा ने वह सब कुछ सुना।

इसके बाद उसका विचार जानने की इच्छा से गुप्त रूप से उस राजा के पीछे-पीछे जाने पर वह वीरवर अपने घर गया, और आकर वहाँ अपनी पत्नी धर्मवती को जगाकर वह सब पृथ्वी का कहा हुआ प्रयोजन कह दिया। उसने भी सुनकर स्वामी से कहा—"स्वामी ! यदि इससे कल्याण होगा तो आप ही इस बच्चे को जगा कर कहें"। तब वह वीरवर सोये हुए उस बालक पुत्र को जगा कर सब समाचार कह कर कहने लगा—"हे पुत्र ! तुम्हें चण्डिका देवी का उपहार बना देने पर यह राजा जीवित रहेगा, नहीं तीसरे दिन मर जायगा"। यह सुन कर बालक होने पर भी उसने अपने 'शक्तिधर' नाम को सार्थक बनाते हुए स्थिर हृदय से शीघ्र पिता से कहा—"पिता जी ! यदि राजा मेरे प्राणों से जी जाय तो मैं कृतार्थ हो जाऊँगा और खाये हुए उसके अन्न का बदला भी सही नहीं चुकता हो जायगा। तो क्यों देरी कर रहे हैं? शीघ्र मुझे ले चल कर भगवती का उपहार बना दीजिये। मेरे जीवन के द्वारा राजा की अमङ्गल-शान्ति हो जाय"। ऐसा उसके कहने पर प्रसन्नता के साथ—"ठीक है, सही में तुम मेरे पुत्र हो" इस

## अथ पञ्चमकथा

ततश्च स राजा त्रिविक्रमसेनः पुनः शिंशपातरोः अन्तिकमभ्येत्य, तथैव लम्बमानं नरशरीरगं तं वेतालमवतार्य्य तस्य बहुना वैकृतेनापि निर्भीकः सत्वरमागन्तुं प्रववृते। आगच्छन्तं तूष्णीं पथि पूर्ववत् स वेतालः प्रावदत्,—"राजन्! अभिनिविष्टोऽसि, दृष्टिप्रियोऽसि च; तत्तव चित्तविनोदाय कथामपरां कथयामि शृणु,—

अस्त्युज्जयिनी नाम भुवनविश्रुता नगरी; तस्यां पुण्यसेनो राजा अभूत्, तस्य प्रियोऽनुजीवी अमात्यो हरिस्वामीति सद्गुणालङ्कृतो विप्रः प्रतिवसति स्म। तस्य गृहपतेरनुरूपायां भार्य्यायां सुसदृशः देवस्वामी नाम पुत्रोऽजायत; एका च असामान्यरूपलावण्यविश्रुता सोमप्रभा नाम अन्वर्थनाम्नी कन्या उदपद्यत। सा एकदा शैशवाति-

---

## पांचवींकथा

इसके बाद वह राजा त्रिविक्रमसेन फिर शीशम के पेड़ के समीप जाकर उसी प्रकार लटकते हुए नर-शरीर में स्थित उस वेताल को उतार कर उसके बहुत से भयोत्पादक विकारों से भी निर्भीक होकर शीघ्र ही आना प्रारम्भ किया। रास्ते में चुप-चाप आते हुए उस राजा को पूर्ववत् उस वेताल ने कहा—"महाराज! तुम आग्रही हो और देखने में प्रिय भी हो इसलिये तुम्हारे मनोरञ्जन के लिये एक दूसरी कथा कहता हूँ, सुनो—

सम्पूर्ण संसार में प्रसिद्ध उज्जयिनी नाम की नगरी है। उस में पुण्यसेन नाम का राजा था। उस का प्रिय सेवक मन्त्री अच्छे गुणों से युक्त हरि-स्वामी नाम का ब्राह्मण निवास करता था। उस गृहस्थ की अपने अनुरूप पत्नी के गर्भ से अपने ही समान देवस्वामी नाम का पुत्र पैदा हुआ और विशेष सौन्दर्य तथा लावण्य से प्रसिद्ध तथा सार्थक नाम वाली सोमप्रभा नाम की एक कन्या उत्पन्न हुई। बचपन को बिताकर सौन्दर्य के अतिशय की

कथमहं वत्स्यामि ?" इत्येवं रुदतीं वारिमध्यवर्त्तिनीं कामपि स्त्रियम्। स च वीरवरः,—"का त्वम् ? कथं वा रोदिषि ?" इति विस्मितः सचकितमपृच्छत्। सा अभ्यधात्,—"भो वीरवर ! मां पृथिवीं जानीहि, अस्याश्च मम इदानीं धार्मिकः शूद्रको नाम राजा भर्त्ता; इतश्च तृतीये दिने तस्य राज्ञो मृत्युर्भविष्यति, तादृशमन्यं पतिं कथमवाप्नुयामिति शोकेन विधुराऽहं शोचामि" इति।

एतदाकर्ण्य स वीरवरस्त्रस्त इव तामब्रवीत्,—"देवि ! अस्ति कश्चिदस्य प्रतीकारः ? येनास्य जगत्प्रभो रक्षा स्यात् ?" इति। तस्य वचनमाकर्ण्य सा वसुमती प्रत्यभाषत,—"वत्स ! एक एवास्त्युपायः, कर्त्तुञ्च शक्तो भवान्" इति। वीरवरोऽवदत्,—देवि ! तद्वद द्रुतं, यावत् शीघ्रं तत् साधयामि ! अन्यथा कोऽर्थः प्राणैरस्माकम् ?"। तदाकर्ण्य धरित्री प्राब्रवीत्,—"वत्स ! त्वदन्यः कः प्रवरः स्वामिभक्तः ? तदस्य उपायं शृणु,—अस्य राजकुलस्यान्तिके राज्ञाऽनेन प्रतिष्ठापिता देवी चण्डिकाऽस्ति; तस्यै चेत् सत्वरं पुत्रमुपहारीकरोषि, तदा एष राजा न म्रियेत, अन्यत् शतं समा जीवेत्। अद्यैव चेत् भवता एतत् क्रियते, तदैव शिवं, नान्यथा" इति। पृथिव्या

---

तुमसे शून्य हो कर कैसे मैं रहूँगी ?" इस प्रकार रोती हुई पानी में स्थित किसी स्त्री को। उस वीरवर ने घबड़ा कर तथा आश्चर्यित हो कर—"तुम कौन हो ? तथा क्यों रोती हो ?" यह पूछा। उसने कहा—"हे वीरवर ! मुझे पृथ्वी समझो, मुझ पृथ्वी का इस समय धार्मिक राजा शूद्रक पति है। आज से तीसरे दिन उस राजा की मृत्यु होगी, 'उस प्रकार का अन्य पति कैसे प्राप्त करूँगी' इस शोक से व्याकुल हो कर मैं रो रही हूँ"।

यह सुनकर उस वीरवर ने भयभीत हो कर उससे कहा—"हे देवि ! इसका कोई प्रतिकार है ? जिससे इस राजा की रक्षा हो ? उसका वचन सुन कर उस पृथ्वी ने प्रत्युत्तर दिया—"वत्स एक ही उपाय है और तुम कर सकते हो"। वीरवर ने कहा—"देवि ! वह शीघ्र कहो, जिससे शीघ्र उसे करूँ, नहीं तो हमारे प्राणों का क्या प्रयोजन है ?" यह सुनकर पृथ्वी ने कहा—"पुत्र ! तुमसे अन्य कौन श्रेष्ठ स्वामिभक्त है ? तो इसका उपाय सुनो —इस राजभवन के समीप में इसी राजा के द्वारा स्थापित की हुई चण्डिका देवी हैं, उन्हीं को अगर शीघ्र ही अपना पुत्र बलिदान कर भेंट दे देते हो तो यह राजा नहीं मरेगा, इससे आगे सौ वर्ष जीवेगा। आज ही अगर तुम यह करते हो तभी कल्याण होगा, नहीं तो नहीं" पृथ्वी के द्वारा इस प्रकार

क्रान्ता रूपोत्कर्षाभिमानवती मातुर्मुखेन पितरं भ्रातरञ्च जगाद,—"शूराय ज्ञानिने विज्ञानिने वा अहं देया, अन्यस्मै दत्ताऽहं न जीवामि" इति ।

तदाकर्ण्य पिता तस्याः तादृशं वरं चिन्वन् यावत् चिन्तामलमापेदे, तावत् स पुण्यसेनेन राज्ञा दाक्षिणात्यस्य कस्यचित् नृपस्य अन्तिकं सन्धिविग्रहाय दौत्ये प्रहितः । तत्र च कृतकार्य्यं तं कश्चित् ब्राह्मणयुवा श्रुततद्दुहितृरूपसम्पत् अभ्येत्य तां सुतामयाचत। स च तमब्रवीत्,—"मत्सुता विज्ञानिनो ज्ञानिनो वा शूरात् अन्यं पतिं नेच्छति, तेषां मध्यात् भवान् कः! कथय" इति । ब्राह्मणोऽवदत्,—"अहं विज्ञानं जानामि"।"तर्हि तत् दर्शय" इति तेनोक्तः स विज्ञानी स्वयुक्त्या खेचरं रथं कल्पयामास, दर्शयामास च तत्र मायायन्त्ररथे तं हरिस्वामिनमारोप्य नीत्वा च स्वर्गादीन् लोकान्; आनिनाय च तुष्टं तं दाक्षिणात्यस्य नृपतेः कटकं, यत्र स स्वकार्य्यार्थमायात इति । ततः स हरिस्वामी तस्मै तां सुतां प्रतिशुश्राव, सप्तमेऽहनि च वैवाहिकलग्नं निश्चिकाय ।

---

अभिमान वाली इस कन्या ने एक बार माता के मुख से पिता और भाई को कहा—"किसी वीर को या किसी शास्त्र के अधिक ज्ञानी को अथवा किसी कला के वैज्ञानिक को मैं दी जाऊँ, यदि इन से अतिरिक्त किसी को दी जाऊँगी तो मैं नहीं जीऊँगी" ।

यह सुन कर उसके पिता उस प्रकार के वर को खोजते हुए जब इसकी अत्यन्त चिन्ता को प्राप्त हुए तब तक वह पुण्यसेन राजा के द्वारा किसी दक्षिण देश के राजा के पास सन्धि-विग्रह के दूत के रूप में भेजा गया। वहाँ कार्य पूरा हो जाने पर उसके पास पहुँच कर उसकी पुत्री का रूप-गुण सुनने वाले किसी ब्राह्मण युवक ने उस पुत्री को माँगा। उसने उसे कहा—"मेरी पुत्री किसी ज्ञानी या विज्ञानी अथवा शूरवीर से अतिरिक्त किसी को पति नहीं बनाना चाहती है, तो उन तीनों में से आप का हैं? यह कहिये"। उस ब्राह्मण ने कहा—"मैं विज्ञान जानता हूँ"। "तो वह दिखलाओ" यह उसके द्वारा कहे जाने पर उस विज्ञानी ने अपनी युक्ति से आकाश में उड़ने वाला रथ बनाया और उस माया के यन्त्र वाले रथ में उस हरिस्वामी को बैठा कर और ले जाकर स्वर्ग आदि लोकों को दिखलाया। और उसे सन्तुष्ट करके दाक्षिणात्य राजा के उसी शिविर में ले आया, जहाँ वह अपने कार्य के लिये आया था। तब उस हरिस्वामी ने उसको वह पुत्री देना स्वीकार कर लिया और सातवें दिन विवाह का लग्न स्थिर किया।

तथाऽभिहितः स वीरो वीरवरस्तदा,—"यामि देवि ! करोमि अधुनैव एतत्" इति प्रत्यवादीत्। वसुन्धरा च,—"भद्रं तेऽस्तु" इत्यभिधाय तिरोदधे। गुप्तमनुसृतः स राजा तत् सर्वं शुश्राव।

ततश्च गूढे तस्मिन् राजनि तद्भावं जिज्ञासमाने गच्छति स वीरवरस्त्वरितं गृहमगात्, आगत्य च तत्र पत्नीं धर्मवतीं विबोध्य तत् सर्वं वसुन्धराप्रोक्तमर्थं प्राब्रवीत्। साऽपि तदाकर्ण्य तं स्वामिनम् आह स्म,—"प्रभो ! शिवं भाव्यं चेत्, तदा शिशुमेनं प्रबोध्य भवानेव ब्रवीतु"। ततः स वीरवरस्तं सुतं बालं सुप्तं प्रबोध्य वृत्तान्तमाख्याय समवोचत्,—"पुत्र ! त्वयि चण्डिकादेव्या उपहारीकृते राजाऽसौ जीवति, नो चेत् तृतीयेऽह्नि विपत्स्यते"। तदाकर्ण्य बालोऽपि यथार्थं नाम दर्शयन् अकातरचित्तः सत्वरं पितरमवदत्,—"तात! यदि राजा मम प्राणैर्जीवेत्, तदाऽहं कृतार्थः, भुक्तस्य च तदन्नस्य परा निष्कृतिः प्रदत्ता स्यात्, तत किं विलम्बयते? शीघ्रं मां नीत्वा भगवत्या उपहारीकुरुष्व, मज्जीवनेन राज्ञोऽमङ्गलशान्तिर्भवतु"। इति तेनोक्तो वीरवरः सहर्षं,—"साधु ! सत्यं त्वं मत्पुत्रः" इति तमभ्यनन्दयत्। तस्य भार्य्या

---

कहा हुआ उस वीर वीरवर ने उस समय—"हे देवि ! जाता हूँ, इसी समय यह करता हूँ" यह जवाब दिया। पृथ्वी भी—"तुम्हारा कल्याण होवे" यह कह कर अन्तर्धान हो गयी। छिप कर अनुसरण करते हुए उस राजा ने वह सब कुछ सुना।

इसके बाद उसका विचार जानने की इच्छा से गुप्त रूप से उस राजा के पीछे-पीछे जाने पर वह वीरवर अपने घर गया, और आकर वहाँ अपनी पत्नी धर्मवती को जगाकर वह सब पृथ्वी का कहा हुआ प्रयोजन कह दिया। उसने भी सुनकर स्वामी से कहा—"स्वामी ! यदि इससे कल्याण होगा तो आप ही इस बच्चे को जगा कर कहें"। तब वह वीरवर सोये हुए उस बालक पुत्र को जगा कर सब समाचार कह कर कहने लगा—"हे पुत्र ! तुम्हें चण्डिका देवी का उपहार बना देने पर यह राजा जीवित रहेगा, नहीं तीसरे दिन मर जायगा"। यह सुन कर बालक होने पर भी उसने अपने 'शक्तिधर' नाम को सार्थक बनाते हुए स्थिर हृदय से शीघ्र पिता से कहा—"पिता जी ! यदि राजा मेरे प्राणों से जी जाय तो मैं कृतार्थ हो जाऊँगा और खाये हुए उसके अन्न का बदला भी सही सही चुकता हो जायगा। तो क्यों देरी कर रहे हैं ? शीघ्र मुझे ले चल कर भगवती का उपहार बना दीजिये। मेरे जीवन के द्वारा राजा की अमङ्गल-शान्ति हो जाय"। ऐसा उसके कहने पर प्रसन्नता के साथ—"ठीक है, सही में तुम मेरे पुत्र हो" इस

तस्मिंश्च काले उज्जयिन्याम् अन्येन द्विजकुमारेण तत्पुत्रो देवस्वामी तत्स्वसारमयाच्यत तेनापि,—"ज्ञानिविज्ञानिशूरेभ्यो नान्यं पतिं मे स्वसा कामयते" इति विज्ञापितः स आत्मानं शूरमभ्यधात्। ततो दर्शितशस्त्रास्त्रविद्याय तस्मै शूराय स देवस्वामी निजानुजां दातुं प्रतिपेदे; कृतनिश्चयश्च मातुः परोक्षं गणकवचनात् सप्तमेऽह्नि विवाहं निर्णिनाय च।

एतस्मिन्नन्तरे हरिस्वामिभार्य्या च केनाप्यपरेण द्विजयूना सुतां याचिता प्राब्रवीत्,—"वत्स! ज्ञानी विज्ञानी शूरो वा मम कन्यां वोढुमर्हति, नान्यः, तत् त्वमेतेषु कः? उच्यताम्" इति। सोऽब्रवीत्,—"अहं ज्ञानी" इति। ततः सा भूतं भविष्यञ्च पृष्ट्वा ज्ञानिनं निश्चित्य तस्मै सुतां दातुं तद्दिने सप्तमेऽह्नि प्रत्यश्रृणोत्।

अन्येद्युश्च हरिस्वामी समागत्य यथाकृतं सर्वं पत्न्यै पुत्राय च समाचख्यौ। सा च स च स्वं स्वं कृतं तत् सर्वं पृथक्-पृथक् तस्मै अवोचत्। इत्थं स हरिस्वामी त्रयाणां वराणां निमन्त्रणात् नितरां व्याकुलः समपद्यत।

---

उसी समय उज्जयिनी में दूसरे ब्राह्मणकुमार ने उसके पुत्र देवस्वामी से उसकी बहन की याचना की। उसके द्वारा भी—"ज्ञानी या विज्ञानी अथवा वीर से अन्य को मेरी बहन नहीं चाहती है" यह सूचित किये जाने पर उसने अपने को 'वीर' बताया। तब शस्त्र-अस्त्र की विद्या दिखलाये हुए उस देवस्वामी ने अपनी बहन देना स्वीकार कर लिया और निश्चय करके माता के परोक्ष में ही ज्यौतिषी के वचन से सातवें दिन विवाह का निर्णय कर लिया।

इसी बीच में हरिस्वामी की पत्नी ने किसी दूसरे ब्राह्मणकुमार के द्वारा पुत्री मांगी जाने पर कहा—"हे ब्राह्मणपुत्र! ज्ञानी या विज्ञानी अथवा कोई वीर मेरी पुत्री से विवाह कर सकता है, अन्य कोई नहीं। तो तुम इनमें से क्या हो? कहो"। उसने कहा—"मैं ज्ञानी हूँ"। तब उसने भूत तथा भविष्य बातें पूछ कर 'यह ज्ञानी है' ऐसा निश्चय करके उसको सातवें दिन पुत्री देने के लिये स्वीकार कर लिया।

दूसरे दिन हरिस्वामी ने आकर जो कुछ निर्णय किया था सब पत्नी को तथा पुत्र को कह दिया। उसकी पत्नी ने तथा पुत्र ने अपना-अपना निर्णय अलग-अलग उसे बताया। इस प्रकार वह हरिस्वामी तीनों वरों के आमन्त्रण से अत्यन्त व्याकुल हो गया।

स च तदाकर्ण्य उद्भ्रान्तः स्वयमेत्य तं ददर्श, पप्रच्छ च सान्त्वयन्,—"किमिदं ब्रूहि सखे! त्वं क्व प्रस्थितः? क्व च प्राप्तः? क्व आस्थाः? क्व च पतितः?" इति। तदाकर्ण्य स तस्मै सर्वं वृत्तान्तम् अशंसत्। राजा व्यचिन्तयत्,—"हन्त! वीरोऽयं मदर्थं कामेनैवं विडम्बितः, तदिदानीमस्याऽऽनृण्यं लब्धुमयमवसरो मया प्राप्तः" इति चिन्तयित्वा स राजा तं जगाद,—"सखे! मुधा शोकं मुञ्च, अहं त्वां तेनैव मार्गेण नीत्वा तामसुरकन्यकां प्रापयामि" इति उक्त्वा स्नानादिना तं समाश्वासयत्।

अथान्येद्युः स मन्त्रिविन्यस्तराज्यभारः तेन समं पोताऽऽरूढः तद्दर्शितेन अम्बुधिमार्गेण गच्छन् तन्मध्यभागे प्राग्वत् समुत्थितं सपताकं गजं ददर्श। तदवलोक्य सत्त्वशीलो राजानमभ्यधात्;—"देव! सोऽयं दिव्यप्रभावो महागजः समुत्थितः, मयि अत्र मग्ने देवेनानुध्वजं मज्जनीयम्" इत्युक्त्वा अस्य निमज्जतो ध्वजस्य निकटं प्राप्य स सत्त्वशीलः पूर्वमात्मानं तत्र न्यक्षिपत्; ततो राजाऽपि तमनु आत्मानं निचिक्षेप। अन्तर्मग्नौ च तौ तत्र तद् दिव्यं पुरमवापतुः।

---

कर व्याकुल होकर उसने स्वयं आकर देखा और सान्त्वना देते हुए पूछा—"हे मित्र! यह क्या हुआ? कहो। तुम कहाँ चले थे? और कहाँ पहुँचे हो? कहाँ रहे? और कहाँ गिरे हो?" यह सुन कर उसने उसे सम्पूर्ण वृत्तान्त कहा। राजा ने सोचा—"अरे! मेरे लिये यह वीर कामदेव के द्वारा इस प्रकार सताया गया है। तो इस समय इससे उऋणता प्राप्त करने के लिये यह अवसर मैंने प्राप्त किया है'। यह सोच कर उस राजा ने उसे कहा—"मित्र! व्यर्थ का शोक छोड़ो, मैं तुमको उसी मार्ग से ले जाकर उस असुर-कन्या के पास पहुँचा देता हूं"। यह कह कर स्नान आदि से उसको आश्वस्त किया।

इसके बाद दूसरे दिन उसने मन्त्री के ऊपर राज्यभार दे कर, उसके साथ जहाज पर चढ़ कर, उसके दिखलाये हुए समुद्र के मार्ग से जाते हुए उसके मध्य भाग में पहले की तरह बाहर निकले हुए पताकाओं से युक्त हाथी को देखा। यह देख कर सत्त्वशील ने राजा को कहा—"महाराज! वही यह अलौकिक प्रभाव वाला विशाल हाथी निकला है, यहाँ मेरे डूबने पर आपको ध्वजा के पीछे डूबना चाहिये" यह कह कर इस डूबती हुई ध्वजा के समीप पहुँच कर उस सत्त्वशील ने पहले अपने को उस समुद्र में गिरा दिया। इसके बाद राजा ने भी उसके पीछे अपने को गिरा दिया। समुद्र के

"तूलिकानां तलेषु किञ्चित् स्यात् न वा, वीक्ष्यताम्"। ततस्ते गत्वा यावदीक्षन्ते एकैकं तूलिकातलं, तावत् सर्वतले स्थितमेकं बालं प्रापुः, दर्शयामासुश्च तं नीत्वा तत्क्षणं राज्ञे। स च राजा तं तूलिकाचण्ड-मानीय तस्याङ्गं तद्रूपमङ्कितं दृष्ट्वा परं विस्मयमवाप; "सप्तभ्यस्तूलिकाभ्यः अस्य तनौ कथमयं बालो मग्नः?" इति चित्रीयमाणस्तां रात्रिमनैषीच्च। प्रातश्चोत्थाय राजा,—"अद्भुतवैदग्ध्यसौकुमार्य्या अमी" इति परितुष्टः तेभ्यस्त्रिभ्योऽपि चण्डेभ्यो हेमलक्षत्रयं ददौ। ततस्ते सुखिता विस्मृतकच्छपाः पितुर्यज्ञविघ्नेन उपार्जितपातकास्तत्र तस्थुः।

इति अद्भुतां कथामाख्याय स्कन्धनिषण्णः स वेतालः तं राजानमपृच्छत्,—"राजन्! पूर्वोक्तं शापं विचिन्त्य त्वम् एषां त्रयाणां कोऽधिकश्चण्डः इति ब्रूहि"। तदाकर्ण्य स धीमान् नृपतिस्तं वेतालं प्रत्यभाषत,—"अहमेतम् अकैतवं तूलिकाचण्डमधिकं मन्ये, यस्याङ्गे प्रगाढबाललाञ्छनं प्रत्यक्षमुद्गतं दृष्टम्; इतराभ्यान्तु कदाचित्

---

किये हुए राजा ने उन लोगों को कहा—"तोसकों के तहों में कुछ है या नहीं; यह देखा जाय"। तब उन लोगों ने जा कर एक एक तोसक के तह में जब देखा तब सभी तोसकों के नीचे स्थित एक केश को प्राप्त किया और उसी समय उसे ले जाकर राजा को दिखलाया। और वह राजा उस तूलिका-चतुर को बुलवा कर उसका शरीर उसी रूप में चिह्नित देख कर अत्यन्त आश्चर्यित हुआ; सात तोसकों के नीचे यह केश कैसे इसके शरीर में गड़ गया?" इस से आश्चर्यित होते हुए उस राजा ने उस रात को बिताया। प्रातः काल उठ कर उस राजा ने—"आश्चर्यजनक चतुरता तथा सुकुमारता-वाले ये लोग हैं" यह समझ कर सन्तुष्ट हो कर उन तीनो तीव्रों को तीन लाख सोना दिया। तब वे तीनों कछुए को भूल कर पिता के यज्ञ में विघ्न होने से पातकी बन कर सुखी हो कर वहीं रहने लगे"।

यह अद्भुत कहानी कह कर कन्धे पर स्थित उस वेताल ने उस राजा को पूछा—"महाराज! पहले कहे हुए शाप को सोच कर तुम उन तीनों में कौन अधिक तीव्र था, यह कहो"। यह सुन कर उस बुद्धिमान् राजा ने उस वेताल को जवाब दिया—"मैं इस निष्कपट तूलिकातीव्र को ही अधिक तीव्र समझता हूँ, जिस के अङ्ग में केश का गहरा चिह्न प्रत्यक्ष रूप से निखरा हुआ देखा गया। अन्य दोनों के द्वारा कदाचित् उस से पहले ही जान लिया गया

तच्च दृष्ट्वा राजा सविस्मयो देवीं तां पार्वतीं प्रणम्य सत्त्वशीलेन समुपाविशत्। तावच्च तत्र सा कन्या सखीजनसमन्विता रूपिणी प्रभेव ततः प्रभामण्डलकान्तारात् निरगात्।

"इयं सा सुमुखी" इति सत्त्वशीले वदति, स राजा तस्यामस्यानुरागो युक्त इत्यमन्यत। साऽपि तं राजानं दिव्यशारीरलक्षणं वीक्ष्याचिन्तयत्,—"कोऽयमपूर्वः पुरुषातिशयः ?" विवेश च अम्बिकापूजार्थं तन्मन्दिरम्। सोऽपि नृपः तं सत्त्वशीलमादाय अवज्ञां प्रदर्शयन् उद्यानमाजगाम। क्षणेन च सा कन्यका कृतदेवीपूजा तस्या देव्याः सत्पतिलाभं याचित्वा तद्गृहाभ्यन्तरात् निर्गत्य सखीमेकां प्राब्रवीत्,—"सखि! क्वासौ वीक्ष्यतां, यो मया इह दृष्टः, स महात्मा क्व तिष्ठति ? युष्माभिर्विचित्य 'आतिथ्यमेत्य गृह्यतां, प्रसादो मे त्वया क्रियताम्' इत्येवम् अभ्यर्थनीयः, स हि पूज्यः कोऽपि उत्तमः पुमान्"। एवं तयोक्ता सखी तं विचित्य उद्यानवर्त्तिनं स्वस्वामिनीनिदेशं प्रह्वा व्यजिज्ञपत्। तदाकर्ण्य स वीरो नृपः सावज्ञं तामुवाच,—"भद्रे!

---

अन्दर डूबे हुए वे दोनों वहाँ उस अपूर्व नगर में पहुँचे। उसे देखकर आश्चर्यित होकर राजा उस पार्वती देवी को प्रणाम करके सत्त्वशील के साथ बैठ गये। तब वहाँ सखी लोगों से घिरी हुई स्वरूपधारण करने वाली प्रभा की तरह वह कन्या प्रकाश से भरी हुई गुफा से निकली।

"यह वही सुन्दरी है" ऐसा सत्त्वशील के कहने पर उस राजा ने "उसके ऊपर इसका अनुराग उचित ही है" यह समझा। उसने भी अलौकिक शारीरिक लक्षणवाले उस राजा को देख कर सोचा कि—"कौन यह अपूर्व पुरुष विशेष है ?" और देवी की पूजा के लिये उस मन्दिर में प्रवेश किया। वह राजा भी उस सत्त्वशील को लेकर अनादर का भाव दिखलाते हुए उद्यान में आ गया। कुछ ही समय में उस कन्या ने देवी की पूजा करके उस देवी से अच्छे पति मिलने की प्रार्थना करके उस मन्दिर से निकल कर एक सखी को कहा—"हे सखि! वह कहाँ है ? देखो, जो मेरे द्वारा यहाँ देखा गया था, वह महात्मा कहाँ है ? तुम लोग खोज कर—'आकर अतिथि-सत्कार ग्रहण करिये, मेरे ऊपर प्रसन्न होइए' इस प्रकार प्रार्थना करना। वह तो कोई पूजनीय उत्तम पुरुष है"। इस प्रकार उसके द्वारा कही हुई सखी ने उद्यान में स्थित उसको खोज कर विनीत होकर अपनी स्वामिनी का आदेश निवेदन किया। यह सुन कर उस वीर राजा ने अनादर के साथ उसको

तत्पूर्वसवगतं सम्भवेत्"। इत्युक्तवतो नरपतेः स्कन्धात् स वेतालः प्राग्वत् प्रययौ। राजाऽपि तमानेतुं पुनः शिंशपातरुमूले तमन्वगात्।

---

होगा, यह सम्भव है"। यह कहनेवाले राजा के कन्धे से वह वेताल पहले की तरह चला गया। राजा भी उसे लाने के लिये फिर शीशम के पेड़ की जड़ में उस का अनुगमन किया।

वचसैव कृतमातिथ्यं, नान्यत् किमपि उपयुज्यते"। एतदाकर्ण्य तया सख्या गत्वा सा असुरनन्दिनी श्राविता। तदा उदारं तमसामान्यं कमपि अभ्यमन्यत। ततस्तेन मानुषायोग्येऽपि आतिथ्ये निःस्पृहेण राज्ञा धैर्य्यपाशेनाकृष्यमाणा पत्यर्थपार्वतीसेवापरिपाकसमन्विता दैत्य-कन्यका स्वयमुपेत्य उद्यानं प्राविशत्, प्रविश्य च राजानं तमभ्येत्य प्रश्रयान्विता आतिथ्यग्रहणार्थं प्रार्थयामास।

ततः स नृपस्तं सत्त्वशीलम् उद्दिश्य तामुवाच—"भद्रे! अनेन कथितां देवीमिह द्रष्टुमहमागतः, दृष्टा च सा गौरी परमाद्भुतकेतनं ध्वजपथं प्राप्य, तदनु त्वञ्च"। तदाकर्ण्य सा कन्यका प्रत्यभाषत,—"राजन्! तर्हि कौतुकात् त्रिजगदद्भुतं पुरं वीक्षितुमागम्यताम्। एवंवादिनीं तां स नृपः विहस्यावदत्—"तदपि अनेन मे कथितं, यत्र सा स्नानवापी अस्ति" इति। कन्यकाऽवादीत्,—"देव! मैवमादिश, नाहं विडम्बनशीला, पूज्ये विडम्बना का? विशेषतस्त्वहं युष्माकं सत्त्वोत्कर्षेण किङ्करीकृताऽस्मि, तन्मम प्रार्थनाभङ्गं मा कुरुष्व"।

---

कहा—"हे भली औरत! वचन से ही अतिथि-सत्कार हो चुका, इससे अतिरिक्त किसी वस्तु की आवश्यकता नहीं है"। यह सुन कर उस सखी ने जाकर उस असुरकुमारी को सुना दिया। तब उसने उसको कोई असाधारण उदार पुरुष समझा। इसके बाद मनुष्य के लिये दुर्लभ अतिथि-सत्कार में भी निर्लोभ राजा के द्वारा धैर्य-पाश से खिची हुई पति के लिये की हुई पार्वती की सेवा का परिणाम प्राप्त करने का अवसरवाली दैत्यकुमारी ने स्वयं जाकर उद्यान में प्रवेश किया। और प्रवेश करके उस राजा के पास पहुँच कर विनय से संयुक्त होकर अतिथि-सत्कार ग्रहण करने के लिये प्रार्थना की।

तब उस राजाने उस सत्त्वशील का उद्देश्य करके उस कन्या से कहा—"हे भली लड़की! इसके द्वारा कही हुई देवी का दर्शन करने के लिये मैं यहाँ आया था। अन्यन्त अद्भुत पताकावाली ध्वजा का रास्ता प्राप्त करके उस गौरी का दर्शन प्राप्त किया, इसके पश्चात् तुम्हारा दर्शन भी हुआ" यह सुनकर उस कन्या ने जवाब दिया—"महाराज! तो कुतूहलवश तीनों भुवन में अद्भुत नगर देखने के लिये आइये"। ऐसा कहनेवाली उस लड़की को उस राजा ने हंस कर कहा—"वह भी इन्होंने कहा है, जहाँ वह स्नान का तालाब है"। कन्या ने कहा—"महाराज! ऐसा मत कहिये, मैं ठगनेवाली नहीं हूँ, पूजनीय व्यक्ति को ठगना कैसा? मैं तो आप के साहस की अधिकता के द्वारा विशेष रूप से दासी बना ली गयी हूँ। तो मेरी प्रार्थना का भङ्ग मत

# अथ नवमकथा

ततः स राजा पुनः शिंशपान्तिकं गत्वा तं वेतालं स्कन्धेनादाय प्रस्थितस्तेन वेतालेन प्राग्वदभ्यधायि,—"राजन्! कथमस्मिन् श्मशाने निशि ते एतादृक् प्रयासः? भूतसङ्कुलं रात्रिभीषणं चिताधूमैरिव ध्वान्तैर्निरुद्धं पितृकाननं किं नेक्षसे? तस्य भिक्षोरनुरोधतः कथमीदृशा प्रयासेन आत्मानं खेदयसि? तदिमं मे प्रश्नं मार्गविनोदकं शृणु,—

अवन्तीषु देवनिर्मिता शैवी तनुरिव उद्दामभोगभूतिविभूषिता पद्मावती, भोगवती हिरण्यवतीति च कृतादिषु त्रिषु युगेषु पुरी क्रमशः आसीत्। कलौ च उज्जयिनीति पुरी अस्ति, तस्यामासीद् वीरदेवो नाम नृपतिः, तस्य पद्मरतिनाम्नी महादेवी आसीत्।

एकदा राजा तया साकं मन्दाकिनीतटे पुत्रकाम्यया तपसा हरमाराधयामास, चिरञ्च तपश्चरन् कदाचित् परितुष्टशङ्करोदिताम्

---

## नवीं कथा

तब वह राजा फिर शीशम के पास जा कर उस वेताल को कन्धे पर ले कर चला और उस वेताल के द्वारा पहले की तरह कहा गया—"महाराज! क्यों रात के समय इस श्मशान में तुम्हारा इस प्रकार का प्रयास है? क्यों तुम प्रेतों से भरे हुए, चिता-धूओं की तरह अन्धकारों से भरे हुए, रात्रि के कारण भयङ्कर इस श्मशान को नहीं देखते हो? उस संन्यासी के अनुरोध से क्यों इस प्रकार के प्रयास से अपने को क्लेशित करते हो? इसलिये रास्ते का मनोरञ्जन करने वाला मेरा यह प्रश्न सुनो,—

"अवन्ती देश में देवता से बनायी हुई उद्धत सर्पशरीर तथा विभूति (भस्म) से विभूषित शङ्कर जी के शरीर के समान उद्धत भोगविलास तथा सम्पत्ति से विभूषित क्रमशः पद्मावती सत्ययुग में, भोगवती त्रेता में तथा हिरण्यवती द्वापर युग में नगरी थी। कलियुग में तो वह उज्जयिनी पुरी है। उस में वीरदेव नाम का राजा था, उस की पद्मरति नाम की महारानी थी।

एक बार राजा उसके साथ गङ्गा के तट पर पुत्र की कामना से तपस्या के द्वारा शङ्कर जी की आराधना करने लगा। चिरकाल तक तपस्या करते हुए किसी समय उसने सन्तुष्ट हुए शङ्कर जी के द्वारा कही

एतदाकर्ण्य स राजा सत्त्वशीलेन सहितः "तथा" इत्युक्त्वा तया सह प्रभामण्डलोपान्तं ययौ।

अथ अपावृतकवाटे तस्मिन् प्रविष्टः अपरं दिव्यं नित्यं सर्वर्त्तु-कुसुमफलशोभितं रत्नकाञ्चनैर्निर्मितमपरं मेरुपृष्ठमिव पुरं ददर्श। तत्र सा महार्हे रत्नासने राजानमुपवेश्य यथोचितं अर्घ्यादिकमानाय्य राजसुताऽब्रवीत्,—"महाभाग! अहमस्मि असुरेन्द्रस्य महात्मनः कालनेमेः सुता, चक्रिणा स मम पिता स्वर्गं प्रापितः, इदञ्च मे पैतृकं पुरद्वयं विश्वकर्मणा कृतं, सर्वकामदे अत्र न जरा न च मृत्युः बाधते; इदानीञ्च त्वं मे पिता सपुरायाः"। इति समर्पितात्मसर्वस्वां तामवादीत् स राजा—यदि एतत्, तर्हि त्वं मम सुता अस्मै सत्त्वशीलाय सुहृदे वीराय वान्धवाय च मया दत्ता"। एवं देवीप्रसादेन मूर्त्तेनेव नृपेण सा उक्ता गुणज्ञा विनता तं राजानं "तथा" इति अन्वमन्यत।

ततस्तस्याः पाणिग्रहं कृत्वा कृतार्थे तस्मिन् सत्त्वशीले, राजा असुरै-

---

करिये"। यह सुन कर उस राजा ने सत्त्वशील के साथ "अच्छा, वैसा ही करूँगा" यह कह कर उस कन्या के साथ प्रभा-मण्डलवाले खोह के पास गया।

इसके बाद किवाड़ा खुल जाने पर उसमें प्रवेश करके उस राजा ने एक दूसरा बहुत सुन्दर सर्वदा सभी ऋतुओं के फूल तथा फल से सुशोभित, रत्नों तथा सुवर्णों से बना हुआ सुमेरु पर्वत की अधित्यका के समान नगर देखा। वहाँ उस राजकुमारी ने बहुमूल्य रत्न के आसन पर राजा को बैठाकर यथोचित अर्घ्य आदि अनवा कर कहा—"हे महानुभाव! मैं असुरराज महात्मा कालनेमि की पुत्री हूँ, भगवान् विष्णु के द्वारा वह मेरे पिता स्वर्ग पहुँचाये गये। ये मेरे पिता के दोनों नगर विश्वकर्मा के द्वारा बनाये हुए हैं। सभी कामना पूर्ण करनेवाले इस नगर में जरा और मृत्यु की बाधा नहीं होती है। इस समय दोनों नगर सहित हमारे आप ही पिता हैं"। इस प्रकार सर्वस्व सहित अपने को समर्पित करनेवाली उस असुरकुमारी को राजाने कहा—"यदि ऐसा है तो तुम मेरी पुत्री हो, इस वीर, बन्धु, मित्र सत्त्वशील को मेरे द्वारा दी जाती हो"। स्वरूप धारण करनेवाले देवी के प्रसाद के तुल्य उस राजा के द्वारा ऐसा कही हुई उस गुणज्ञा ने विनम्र हो कर उस राजाका "वैसा ही करूँगी" इस प्रकार अनुमोदन किया।

तब उस का पाणिग्रहण कर के उस सत्त्वशील के कृतार्थ हो जाने पर

आकाशवाणीं शुश्राव,—"राजन्! उत्पत्स्यते ते पुत्रः शूरः कुलोद्वहः; कन्या चैका लावण्येन जिताप्सराः"। एतां नाभसीं वाणीं श्रुत्वा स भूपतिरभीष्टसिद्धिप्रहृष्टः महिष्या समं स्वनगरीमाययौ। तस्य प्रथमं पद्मरत्यां देव्यां शूरदेवो नाम पुत्रः; तदनु च अनङ्गरतिर्नाम अनङ्ग-मोहिनी कन्या समजायत। क्रमेण च तस्यां वृद्धिं गतायां स राजा सदृशं वरं प्रेप्सुः पृथिवीमण्डलस्थान् सर्वान् नृपतीन् पटलिखिता-नानाययत्। यदा तेषु एकोऽपि तस्याः सदृशो न प्रत्यभासत, तदा स राजा वात्सल्यात् तां सुतामभाषत,—"वत्से! अहं तावत् ते सदृशं वरं न पश्यामि, तत् सर्वान् नृपान् समानाय्य स्वयंवरं कुरुष्व"। एतत् पितृवचनमाकर्ण्य सा राजपुत्री जगाद,—"तात! स्वयंवरम् अतिह्रेपणं, तदहं नेच्छामि; यो हि युवा सुरूपः केवलं पूर्णं विज्ञानं वेत्ति, तस्मै त्वया अहं देया, न्यूनाधिकेन मे नास्ति प्रयोजनम्"।

इति दुहितुर्वचः समाकर्ण्य यावत् स भूपतिस्तादृशं वरम् अन्वि-ष्यति, तावत् तत् लोकमुखात् विदित्वा चत्वारो वीरा विज्ञानिनो

---

हुई आकाशवाणी सुनी—"हे महाराज! तुम्हारा पुत्र उत्पन्न होगा जो कि वीर होगा और कुल की मर्यादा वहन करेगा और अपने सौन्दर्य से अप्सराओं को जीतने वाली एक कन्या भी उत्पन्न होगी"। इस आकाशवाणी को सुन कर मनोरथ पूर्ण होने से प्रसन्न हो कर वह राजा महारानी के साथ अपनी नगरी को गया। उसके पद्मरति देवी के गर्भ से पहले शूरदेव नाम का पुत्र और पश्चात् अनङ्गरति नाम की कामदेव को मोहित करनेवाली कन्या उत्पन्न हुई। क्रमशः उसके बढ़ जाने पर उस राजा ने उसके सदृश वर प्राप्त करने की इच्छा से पृथिवी पर रहनेवाले सभी राजाओं के चित्र मङ्गवाये। जब उनमें एक भी उसके सदृश न मालूम हुआ, तब उस राजा ने स्नेह से उस पुत्री को कहा—"हे पुत्री! मैं तो तुम्हारे सदृश वर नहीं देखता हूँ, तो सभी राजाओं को बुला कर स्वयंवर करो"। यह पिता का वचन सुन कर उस राजकुमारी ने कहा—"पिताजी! स्वयंवर तो अत्यन्त लज्जाजनक कार्य है, वह मैं नहीं चाहती हूँ; जो युवक सुन्दर होते हुए केवल एक विज्ञान को पूर्णरूप से जानता हो आप के द्वारा मैं उसी को दी जाऊँ। कम या अधिक से मुझे कोई प्रयोजन नहीं है।

पुत्री का यह वचन सुन कर जब वह राजा उस प्रकार का वर खोजने लगा तब लोगों के मुह से वह समाचार जान कर वीर तथा विज्ञानी चार

भव्याः पुरुषा दक्षिणापथात् तं राजानमाययुः। ते च राज्ञा सत्कृताः एकैकशः स्वं स्वं विज्ञानं राजसमक्षं शशंसुः। तेषामेको जगाद,—अहं तावत् शूद्रः नाम्ना पञ्चफुट्टिकः; एकोऽहमन्वहं पञ्च अग्रयाणि वसनयुग्मानि करोमि, तेषामेकं देवाय प्रयच्छामि, एकं द्विजाय, एकमात्मनः कृते परिगृह्णामि, एकञ्च भार्य्यायै (या मे भवति) ददामि, पञ्चमञ्च विक्रीय आहारादिकं विदधामि। तदेवं विज्ञानिने मह्यम् अनङ्गरतिस्ते दुहिता दीयताम्" इति।

द्वितीयोऽब्रवीत्—"अहं तावत् वैश्यः भाषाज्ञो नाम सर्वेषां मृग-पक्षिणां रुतं वेद्मि; तदेषा राजपुत्री मह्यं दीयताम्" इति।

ततस्तृतीयोऽभाषत,—"अहं खड्गधरो नाम भुजवीर्य्यशाली क्षत्रियः, खड्गविद्याविज्ञाने अस्यां क्षितौ मे प्रतिमल्लो नास्ति; हे राजन्! तदेषा तनया ते मह्यं दीयताम्" इति।

ततश्चतुर्थोऽब्रवीत्,—"राजन्! अहं तावत् जीवदत्तो नाम विप्रः, मम चैतादृशं विज्ञानमस्ति यत्, मृतानपि जन्तून् आनीय आशु जीवतो दर्शयामि, तद्वीरचर्य्यासिद्धं माम् एषा ते तनया पतिं प्रपद्यताम्"

---

सुन्दर पुरुष दक्षिण देश से उस राजा के पास पहुँचे। वे लोग राजा के द्वारा सत्कार प्राप्त कर के उन में से एक एक क्रमशः अपना अपना विज्ञान राजा के सामने कहने लगे। उन में से एक ने कहा—"मैं तो शूद्र हूँ, मेरा नाम पञ्चफुट्टिक है। अकेला मैं प्रति दिन पाँच जोड़े श्रेष्ठ वस्त्र बनाता हूँ। उन में से एक देवता को देता हूँ, एक ब्राह्मण को, एक अपने लिये रख लेता हूँ, एक पत्नी के लिये, जो मेरी पत्नी होगी उसके लिये रख देता हूँ, पाँचवें को बेच कर भोजन आदि का प्रबन्ध करता हूँ। अतः तुम्हारी पुत्री अनङ्गरति इस प्रकार के मुझ विज्ञानी को दी जाय"।

दूसरे ने कहा—"मैं तो वैश्य हूँ, भाषाज्ञ मेरा नाम है। सभी मृग तथा पक्षियों की ध्वनि को जानता हूँ। इसलिये यह राजकुमारी मुझे दी जाय"।

तब तीसरे ने कहा—"मैं भुजाओं का बल रखने वाला खड्गधर नाम का क्षत्रिय हूँ। खड्ग-विद्या के विज्ञान में इस पृथ्वी पर मेरे तुल्य योद्धा कोई नहीं है। इस लिये हे महाराज! तुम्हारी कन्या मुझे दी जाय"।

तब चौथे ने कहा—"हे महाराज! मैं तो जीवदत्त नाम का ब्राह्मण हूँ। मेरा इस प्रकार का विज्ञान है कि मरे हुए भी प्राणी को ला कर शीघ्र जीवित कर के दिखला देता हूँ। इस लिये मुझ वीरचर्य्या में सिद्ध पुरुष को यह तुम्हारी पुत्री पति रूप में स्वीकार करे"। ऐसा कहते हुए उन सुन्दर वेष तथा

वासवोपमः स राजा अन्तःपुरिकाभिः साकं कन्दर्पजीवितस्यापि जीवितं मधु सिषेवे। तत्र तस्य राज्ञः इन्दुलेखाया देव्याः केलिकचग्रहात् कर्णाग्रात् उत्सङ्गे उत्पलं पपात। तदभिघातेन च क्षते जाते अभिजाता सा महादेवी,—"हा! हा!" इत्युक्त्वा मुमूर्च्छ। तदवलोक्य विह्वलेन राज्ञा परिजनेन च शीताम्बुमारुतैः समाश्वासिता सा कथञ्चित् संज्ञामवाप। अथ राजा तां राजधानीं नीत्वा भिषजां शतैर्विविधौषधैः प्रियामुपाचरत्।

ततः स राजा रात्रौ तां सुस्थितां दृष्ट्वा द्वितीयया तारावल्या सह चन्द्रप्रासादमारुरोह। तत्र तस्य राज्ञः क्रोडसुप्तायां तस्यां गवाक्षमार्गेण हिमकरत्विषः तदङ्गेषु पेतुः; ततः क्षणात् प्रबुद्धा सा,—"दग्धाऽस्मि" इतिवादिनी सहसा शयनादुत्तस्थौ। अथ स राजा प्रबुद्धः—"किमेतत्?" इति सम्भ्रान्तः समुत्थाय तस्या अङ्गेषु विस्फोटान् निर्गतान् अपश्यत्। "किमेतत्?" इति पृच्छन्तं तं तारावली राज्ञी प्राहस्म नाम;—"अङ्गपतितैरिन्दोः किरणैरेतत् मे कृतम्"। इत्युक्तवत्याः रुदत्यास्तस्यास्ताम् आर्त्तिं दृष्ट्वा राजा

---

वह राजा महारानियों के साथ कामदेव के प्राणों में भी जीवन देने वाली मदिरा का सेवन करने लगा। वहाँ उस राजा के इन्दुलेखा देवी के क्रीड़ा में बाल पकड़ने से कान के ऊपर से कमल का फूल गोदी में गिर गया। उसके आघात से चोट लगने से वह कुलीना महारानी "हा! हा!" यह कह कर मूर्च्छित हो गयी! यह देखकर विह्वल होकर राजा के द्वारा और नौकरों के द्वारा शीतल जल और हवा से उपचार किये जाने से वह किसी प्रकार होश में आयी। इसके बाद उस राजा ने उसे राजधानी में ले जाकर सैकड़ों वैद्य तथा दवाओं से प्रियतमा का उपचार करवाया।

तब वह राजा रात में उसको स्वस्थ देखकर दूसरी पत्नी तारावली के साथ चन्द्रमा की किरण सेवन करने योग्य चन्द्र नामक महल के ऊपर गया। वहाँ उस राजा की गोदी में उसके सोयी रहने पर खिड़की के मार्ग से चन्द्रमा की किरणें उसके अङ्गों पर गिरने लगीं। तब कुछ ही देर में एकाएक जाग कर वह "हाय! मैं जल गयी" यह कहती हुई बिस्तरे से उठ गयी। इसके बाद जागे हुए उस राजा ने "यह क्या हुआ?" इस रूप में घबड़ाये हुए उठकर उसके अङ्गों में निकले हुए फफोलों को देखा। "यह क्या हुआ" यह पूछते हुए उस राजा को तारावली रानी ने कहा, अरे!—"शरीर पर गिरी हुई चन्द्रमा की किरणों के द्वारा मेरा यह किया गया है" यह कह कर

इति। एवं ब्रुवतः तान् दिव्यवेशाऽऽकृतीन् पश्यन् राजा वीरदेवः सुतया दोलाऽऽरूढ इवाभवत्"।

इति कथामाख्याय वेतालः राजानमप्राक्षीत्,—"राजन्! पूर्वोक्तं शापं स्मृत्वा ब्रूहि, एतेषां कस्मै कन्यैषा देया" इति। एतदाकर्ण्य राजा तं वेतालं प्रत्यवादीत्,—"भवान् केवलं कालक्षेपाय मां मौनं त्याजयति, अन्यथा कोऽयं गहनः प्रश्नः? तदुच्यताम्; शूद्राय कुविन्दाय कथं क्षत्रिया दीयते, वैश्याय च? यच्च तद्गतं मृगादिभाषाविज्ञानं, तत् कस्मिन् कार्ये उपयुज्यते? विप्रेणापि तेन स्वकर्मप्रच्युतेन ऐन्द्रजालिकेन पतितेन वीरमानिना किम्? तस्मात् क्षत्रियायैव खड्गधराय विद्याशौर्यशालिने सा देया" इति। एतत्तस्य वचो निशम्य स वेतालः योगबलात् स्कन्धदेशात् सहसा अलक्षितः क्वापि जगाम। राजाऽपि तथैव तमनुययौ; सोत्साहघने हि वीरहृदये न जातु खेदोऽन्तरं लभते।

---

आकारवालों को देखता हुआ राजा वीरदेव पुत्री के साथ दोला पर चढ़े हुए मन वाला (कभी इधर कभी उधर आते हुए मनवाला) हो गया"।

यह कथा कह कर वेताल ने राजा को पूछा—"महाराज! पहले के कहे हुए शाप का स्मरण कर के कहो कि इन में से किस को यह कन्या दी जाय?"। यह सुन कर उस राजा ने उस वेताल को जवाब दिया—"आप तो केवल समय नष्ट करने के लिये मेरा मौन त्याग कराते हैं, नहीं तो कौन सा यह कठिन प्रश्न है? तो कहिये, एक शूद्र जुलाहे को कैसे क्षत्रियकुमारी दी जाय? और उस वैश्य को भी कैसे दी जाय? जो कि उस में मृग आदि की भाषा का विज्ञान है, वह किस कार्य में प्रयोग किया जायगा? अपने कर्म से गिरे हुए अत एव पतित तथा अपने को वीर मानने वाले ऐन्द्रजालिक उस ब्राह्मण से भी क्या प्रयोजन? अतः शौर्यविद्या वाले क्षत्रिय खड्गधर को ही वह कन्या दी जाय"। उस राजा का यह वचन सुन कर वह वेताल योगबल से उस राजा के कन्धे से एकाएक अलक्षित हो कर कहीं चला गया। राजा ने उसी प्रकार उसका अनुसरण किया। क्यों कि उत्साह से भरे हुए वीरों के हृदय में कष्ट कभी भी अवसर नहीं प्राप्त करता है।

विह्वलः परिजनमाह्वयत्, अकारयच्च तेन परिजनेन सजलैर्नलिनीदलैः शय्याम्, अदापयच्च अङ्गेषु आर्द्रश्रीखण्डविलेपनानि।

तावच्चास्य तृतीया महिषी मृगाङ्कवती तत्पार्श्वम् आगन्तुमना निजमन्दिरात् निरगमत्, निर्गच्छन्ती च सा कापि निःशब्दायां तस्यां रजन्यां विदूरे सुव्यक्तं धान्यावघातजं मुसलध्वनिं शुश्राव। श्रुत्वैव सा,—"हा! मृताऽस्मि" इति वदन्ती करौ धुन्वती च व्यथिता च मार्गे एव उपाविशत्। ततः प्रतिनिवृत्त्यैव परिजनेन स्वमेवान्तःपुरं नीता सा बाला रुदती शयनं भेजे। तत्परिजनश्च,—"किमेतत्?" इति चिन्वन् साश्रुः आलीनभ्रमरौ पद्माविव किणाङ्कितौ तस्या हस्तौ ददर्श, उवाच च गत्वा तं वृत्तान्तं राज्ञे। सोऽपि राजा सम्भ्रान्तः समागत्य,—"किमेतत्?" इति तां प्रियां पप्रच्छ। साऽपि हस्तौ प्रदर्श्य व्यथिता प्रोवाच,—"नाथ! मुसलध्वनौ श्रुतमात्र एव मे एतौ किणौ जातौ" इति। ततः स राजा दाहशमनमौषधं चन्दनविलेपनादिकं तस्या हस्तयोः अदापयत्। "एकस्या उत्पलेनापि पतता क्षतम् आहितं, द्वितीयस्याः, शशिकरैरपि अङ्गं

---

रोने वाली उसकी उस पीड़ा को देखकर राजा ने विह्वल होकर नौकरों को बुलाया और उन नौकरों के द्वारा जल से भींगे हुए कमल के पत्तों से शय्या बनवाया तथा उसके अङ्गों पर गीले श्रीखण्ड चन्दन से विलेपन करवाया।

तब तक उसकी तीसरी रानी मृगाङ्कवती उसके पास आने की इच्छा से अपने महल से निकली। निकलती हुई उसने उस निःशब्द रात में कहीं दूर में स्पष्ट रूप से धान-कूटने से मुसल का शब्द सुना। सुनते ही वह "अरे! मर गई" यह कहती हुई हाथों को कँपाती हुई व्यथित होकर रास्ते में ही बैठ गयी। वहाँ से लौटा कर नौकरों के द्वारा अपने अन्तःपुर पहुँचायी हुई वह बाला रोती हुई बिस्तरे पर लेट गयी। उसके आँसू से भरी आँख वाले नौकर लोगों ने "यह क्या हुआ?" इसका अन्वेषण करते हुए बैठे हुए भ्रमर वाले दो कमलों के सदृश घट्ठों से चिह्नित उसके दोनों हाथों को देखा। और उन लोगों ने वह समाचार राजा को कहा। घबड़ाये हुए उस राजा ने भी आकर "यह क्या हुआ?" यह उस प्रिया को पूछा। व्यथित होती हुई उसने भी दोनों हाथों को दिखला कर कहा—"हे नाथ! मुसल के शब्द के सुनने मात्र से ही मेरे ये घट्ठे हो गये हैं। तब उस राजा ने जलन शान्त करने वाली दवाएँ चन्दन-विलेपन आदि उसके हाथों में लगवा दिया। "एक को गिरे हुए कमल के आघात से चोट लग गई, चन्द्रमा की किरणों

# अथ दशमकथा

ततश्च स राजा पुनः शिंशपामूलं गत्वा तं वेतालं तथैव स्कन्धमारोप्य सत्वरं कृतमौनः समुच्चचाल। प्रयान्तश्च तं स्कन्धवर्त्ती स वेतालोऽपृच्छत्,—"राजन्! श्रान्तोऽसि, तदिमां श्रान्तिहारिणीं कथां शृणु,—

आसीद् वीरबाहुर्नाम सकलभूपालशिरःसमभ्यर्चितशासनः पाकशासन इवापरो नृपतिः, तस्यानङ्गपुरं नाम नगरवरमभवत्। तत्रार्थदत्तो नाम महाधनः सार्थवाहः प्रतिवसति स्म, तस्य धनदत्तो नाम ज्येष्ठः पुत्रः कनीयसी च कन्या मदनसेना नाम समजायत।

एकदा धर्मदत्तो नाम कस्यचिद् वणिक्पतेस्तनयः तां लावण्यरसनिर्झरां कुचकुम्भाग्रबलित्रितयरञ्जितां यौवनद्विरदस्येव लीलामज्जनवापिकां वीक्ष्य सद्यः स्मरबाणौघपातापहृतचेतनः समपद्यत, —"अहो! मारेण धाराऽधिरूढेन अमुना रूपेण द्योतिता मल्ली मे

---

## दशवीं कथा

इसके बाद वह राजा फिर शीशम की जड़ में जा कर उस वेताल को उसी प्रकार कन्धे पर उठा कर मौन धारण किये हुए शीघ्रता से चल दिया। जाते हुए उस को कन्धे पर रहने वाले उस वेताल ने कहा—"महाराज! थक गये हो, तो परिश्रम दूर करने वाली यह कहानी सुनो—

सभी राजाओं के शिर से सम्मान किये हुए शासनवाला, द्वितीय इन्द्र के समान वीरबाहु नाम का राजा था। उसका अनङ्गपुर नाम का श्रेष्ठ नगर था। वहाँ बहुत बड़ा धनी अर्थदत्त नाम का बनियाँ रहता था। उसका धनदत्त नाम का ज्येष्ठ पुत्र था और मदनसेना नाम की छोटी पुत्री उत्पन्न हुई।

एक बार किसी बहुत बड़े व्यापारी का धर्मदत्त नामवाला पुत्र, सौन्दर्यप्रवाह के झरना स्वरूप, स्तन-कलश के अग्र भाग और त्रिवली से सुशोभित, युवावस्थारूपी हाथी के विलासस्नान के सरोवर के सदृश उस कन्या को देख कर तत्काल ही कामदेव के बाण-समूह के लगने से हतज्ञान हो गया। महल के छत पर चढ़ी हुई उस को देख कर—"अरे! कामदेव के द्वारा इस

दग्धं, तृतीयस्याश्चास्याः श्रुतेन मुसलशब्देन हस्तयोरीदृशाः किणा जाताः; अहो! युगपत् एतासां मे प्रेयसीनां गुणोऽपि अभिजातत्वं दोषायैव जातः" इति चिन्तयतः अन्तःपुरेषु भ्रमतस्तस्य नृपतेः सा त्रियामा शतयामेव कृच्छ्रात् विरराम। प्रातश्च स राजा शल्य-हर्तृभिर्भिषग्भिः सह तथा विधानमकरोत्, यथा अचिरात् स्वस्थान्तः-पुरनिर्वृतोऽभवत्"।

इत्थमेतां कथामाख्याय वेतालः पप्रच्छ,—"राजन्! एतासां का सुकुमारतरा?"। "यस्याः। मुसले अस्पृष्टेऽपि शब्देनैव किणा उद्गताः, उत्पलेन्दुकरैः स्पर्शे जाते ययोर्व्रणविस्फोटा वृत्ताः, ते उभे तस्याः समे न"। इति राज्ञो वचनमाकर्ण्य स वेतालः यथास्थानमगात्, राजा च दृढनिश्चयः पुनस्तमानेतुं सत्वरो बभूव।

---

से भी दूसरे का अङ्ग जल गया, इस तीसरी के हाथों में सुने हुए मुसल के शब्द से इस प्रकार के घट्ठे हो गये हैं। अरे! एक साथ ही मेरी इन प्रियतमाओं का कुलीनता रूपी गुण दोष ही हो गया है" यह सोचते हुए तथा रनिवासों में घूमते हुए उस राजा की वह रात सौ पहरवाली रात की तरह बहुत कठिनाई से बीती। प्रातःकाल उस राजा ने क्षत आराम करने वाले वैद्यों के साथ उस प्रकार का प्रबन्ध किया जिससे वह राजा स्वस्थ हुई रानियों के द्वारा सुखी होकर रहने लगा"।

इस प्रकार इस कथा को कह कर वेताल ने पूछा—"महाराज! इनमें से सबसे अधिक सुकुमारी कौन थी?" "जिसके हाथ में मुसल का स्पर्श न होने पर भी शब्द से ही घट्ठे हो गये, कमल तथा चन्द्रमा की किरणों से स्पर्श होने पर जिन दोनों के फोड़े तथा फफोले हो गये वे दोनों उसके समान नहीं थीं"। यह राजा का वचन सुनकर वह वेताल अपने स्थान पर चला गया। वह दृढ़निश्चय वाला राजा भी फिर उसको लाने के लिये प्रयत्न-शील हो गया।

हृदयं भेत्तुमिव निर्मिता"। इत्येवं प्रासादाग्रमारूढां तां दृष्ट्वा चिन्तयतः चक्राह्वस्येव तस्य वासरोऽतिचक्राम।

ततः सा मदनसेना चित्तञ्च तस्य धर्म्मदत्तस्य तद्दर्शनदुःखाग्निसन्तप्तं गृहान्तरं विवेश। भास्वांश्च तद्दर्शनजनितरागोऽपराम्बुधौ निपपात। ताञ्च सुमुखीं नक्तम् अभ्यन्तरागतां दृष्ट्वा तन्मुखाब्जविनिर्जितश्चन्द्रः शनैरुदगात्। धर्म्मदत्तश्च तावद् गृहं गत्वा तामनुचिन्तयन् शयने चन्द्रपादाहतो लुठन् निपत्य तस्थौ; यत्नेन सखिभिर्बन्धुभिश्च पृच्छ्यमानो न किञ्चित् कथयामास। निशि च कृच्छ्रात् प्राप्तनिद्रः तथैव तां पश्यन् अनुनयंश्च समुत्सुकः किमिव नाकरात्; प्रातश्च प्रबुद्धो गत्वा रहसि स सखीं प्रतीक्षमाणाम् उद्यानवर्त्तिनीं मदनसेनां ददर्श, उपेत्य च परिष्वङ्गलालसः प्रेमपेशलैर्वचोभिश्चरणानतः उपच्छन्दयामास।

साऽब्रवीत्,—"अहं कन्या, साम्प्रतं ते परदाराश्च, यतोऽहं पित्रा समुद्रदत्ताय वणिजे वाचा दत्ता, कतिपयैरेव दिनैर्विवाहो मे भविता,

---

सौन्दर्य से चमकती हुई यह मल्लिका मेरे हृदय को बींधने के लिये ही बनायी गयी है" इस प्रकार सोचते हुए उसका चक्रवाक के समान दिन बीत गया।

इसके बाद वह मदनसेना और उस धर्मदत्त का मदनसेना के दर्शन से उत्पन्न दुःखरूपी अग्नि से सन्तप्त मन भी घर के अन्दर प्रवेश किये। उसके दर्शन से ही मानो राग उत्पन्न होने से सूर्य भी पश्चिम समुद्र में गिर गया। उसके मुख-कमल से पराजित हुआ चन्द्रमा रात में उस सुन्दरी को घर के अन्दर गई हुई देख कर धीरे धीरे बाहर निकल आया। और धर्मदत्त भी तब अपने घर जा कर उसी का चिन्तन करते हुए चन्द्रमा के पादों से ( किरण रूपी चरणों से ) ताड़ित हो कर लुढ़कते हुए की तरह बिस्तरे पर गिर कर लेट गया। यत्नपूर्वक मित्रों के द्वारा तथा बन्धुओं के द्वारा पूछे जाने पर उसने कुछ भी नहीं कहा। फिर रात में बड़ी कठिनाई से निद्रा प्राप्त करने पर उसी प्रकार उसको सपने में देखते हुए उत्सुक हो कर अनुनय-विनय करते हुए क्या क्या नहीं किया। प्रातःकाल जाग कर उसने जा कर एकान्त में सखी की प्रतीक्षा करती हुई वाटिका में स्थित मदनसेना को देखा और उसके पास पहुँच कर आलिङ्गन के अभिलाषी हो कर पैरों पर गिर कर प्रेम से कोमल वचनों के द्वारा प्रार्थना की।

उस मदनसेना ने कहा—"मैं कुमारी हूँ और इस समय तुम्हारे लिये परदारा हूँ; क्यों कि पिता के द्वारा मैं समुद्रदत्त नामक वणिक् को वचन के द्वारा दे दी गयी हूँ। कुछ ही दिनों में मेरा विवाह होगा। इसलिये चुपचाप

## अथ द्वादशकथा

अथ राजा तथैव तस्य शिंशपातरोरन्तिकं गत्वा तं वेतालं स्कन्धमारोप्य पुनर्गन्तुं प्रावर्त्तत। वेतालश्च भूयस्तमवादीत्,—"राजन्! इत्थम् अनुद्विग्नः त्वं भृशं मे प्रियोऽसि, तदेतां हृद्यामाख्यायिकां ते श्रमविनोदाय कथयामि, शृणु—

आसीदङ्गदेशे यशःकेतुरिति युवा स्वाङ्गगुप्त्यर्थम् अदग्धः तनुमाश्रितोऽपर इव स्मरो नरपतिः। बाहुवीर्य्येण पराजितवैरिकुलस्य तस्य शक्रस्येव बृहस्पतिः दीर्घदर्शी नाम मन्त्री अभूत्। कदाचित् स राजा वयोरूपमदात् निहतकण्टकं राज्यं तस्मिन् मन्त्रिणि विन्यस्य शनैः सुखासक्तः समजायत। केवलं निरन्तरं प्रमदाऽऽस्पदे अन्तःपुरे तस्थौ, शुश्राव च तासां सानुरागगीतं, न हितैषिणां वचनम्; रज्यति स्म स सततं जालवातायनेषु, पुनर्बहुच्छिद्रेषु राजकार्य्येषु कदाचिदपि। दीर्घदर्शी तु तं राज्यचिन्ताभारं समुद्वहन् दिवानिशम् अतन्द्रितस्तस्थौ।

---

### बारहवीं कथा

इसके बाद वह राजा उसी प्रकार उस शीशम के पेड़ के पास जाकर उस वेताल को कन्धे पर उठा कर फिर जाना प्रारम्भ किया। वेताल ने फिर उसको कहा—"महाराज! इस प्रकार अव्यग्र (शान्त) रहने से तुम मुझे बहुत प्रिय हो गये हो, तो श्रम दूर करने के लिए यह मनोहर कहानी कहता हूँ, सुनो—

अङ्गदेश में अपने अङ्गों की रक्षा के लिये शरीर धारण किये हुए विना जले हुए दूसरे कामदेव के सदृश यशःकेतु नाम का युवक राजा था। इन्द्र के सदृश बाहुबल के द्वारा शत्रुसमूह को पराजित करने वाले उस राजा का बृहस्पति के तुल्य दीर्घदर्शी नाम का मन्त्री था। किसी समय वह राजा जवानी तथा सौन्दर्य के मद से निष्कण्टक किया हुआ राज्य उस मन्त्री के ऊपर रखकर धीरे-धीरे सुख में आसक्त हो गया। सतत केवल स्त्रियों से भरे हुए अन्तःपुर में रहने लगा। उन स्त्रियों का अनुराग से भरा हुआ गीत वह सुनता था, हितैषियों का वचन नहीं सुनता था; वह हमेशा खिड़की की जाली में आनन्दित होता था, किन्तु बहुत गड़बड़ियों से भरे हुए राजकार्यों में कभी भी नहीं आनन्दित होता था। दीर्घदर्शी तो उस राज्य-चिन्ता-भार को वहन करते हुए दिन-रात सावधान रहता था।

तत् तूष्णीं गच्छ, मा कश्चित् पश्येत्, ततो दोषो भवेत्"। इत्युक्तस्तया त्यक्तश्च स धर्मदत्तस्तां जगाद,—"सुन्दरि! यदस्तु, त्वां विना नाहं जीवेयम्"। तदाकर्ण्य सा वणिक्सुता कन्याभावदूषणभयाऽऽकुला तमुवाच,—"तर्हि विवाहो मे तावत् सम्पद्यतां, पिता मे चिरकाङ्क्षितं कन्यादानफलं लभतां, ततोऽहं त्वां निश्चितं प्रणयेन समुपेष्यामि"। तदाकर्ण्य सोऽब्रवीत्,—"अन्यपूर्वा मम प्रिया नेष्टा, परभुक्ते कमले विमलेऽपि किं रतिर्जायते?"। इति तेनाभिहिता साऽवादीत्,—"तर्हि कृतोद्वाहैव पूर्वं त्वामुपयास्यामि, ततः पतिम्" इति। एवमुक्तवतीं तां वणिक्पुत्रीं प्रत्ययार्थं शपथेन सत्येन स धर्म्मदत्तः सम्बबन्ध। ततस्तेनोज्झिता सा समुद्विग्ना स्वं मन्दिरं विवेश।

अथ प्राप्ते लग्नदिवसे निर्वृत्तोद्वाहमङ्गला सा गत्वा पतिगृहं, नीत्वा च उत्सवेन वासरं, निशि पत्या समं शयनीयगृहमध्यास्त; तत्र शय्यानिषण्णाऽपि असम्मुखी समुद्रदत्तस्य तस्य पत्युः परिष्वङ्गं न प्रत्यपद्यत। तेनानुनीयमानाऽपि सा यदा उदश्रुः बभूव, तदा स

---

चले जाओ, कोई देखे न, नहीं तो उससे बहुत बड़ी हानि होगी"। उसके द्वारा यह कहे हुए तथा परित्याग किये हुए उस धर्मदत्त ने उसे कहा—"हे सुन्दरी! जो कुछ होवे, किन्तु मैं तुम्हारे बिना नहीं जीऊँगा"। यह सुन कर अपने कौमार व्रत के नष्ट होने के भय से व्याकुल हो कर उस वणिक्पुत्री ने उसे कहा—"तो मेरा विवाह सम्पन्न हो जाय, मेरे पिता बहुत दिनों से वाञ्छित कन्यादान का फल प्राप्त कर लें, तब मैं निश्चित ही प्रेम से तुम्हारे पास आऊँगी"। यह सुन कर उस धर्मदत्त ने कहा—"पहले अन्य की उपभोग की हुई प्रिया मुझे पसन्द नहीं है, स्वच्छ रहने पर भी दूसरे के उपभोग किये हुए कमल में आनन्द मिलता है क्या?"। उस के द्वारा यह कही हुई उसने कहा—"तो विवाह होते ही पहले तुम्हारे पास आऊँगी तब पति के पास जाऊँगी"। इस प्रकार कहने वाली उस वणिक्पुत्री को विश्वास के लिये शपथ के द्वारा तथा सत्य के द्वारा उस धर्मदत्त ने अच्छी तरह बाँध लिया। तब उससे मुक्त हुई उसने उद्विग्न हो कर अपने भवन में प्रवेश किया।

इसके बाद विवाह के लग्न के दिन मिलने पर और वैवाहिक मङ्गल-कार्य हो जाने पर वह उत्सव के द्वारा दिन बिता कर रात में पति के घर में जा कर पति के साथ बिस्तरे पर लेट गयी। वहाँ बिस्तरे पर सोयी रह कर भी विमुख रह कर उसने उस समुद्रदत्त नामक अपने पति का आलिङ्गन नहीं किया। उस के द्वारा अनुनय किये जाने पर जब वह आँसू गिराने लगी तब

अथ पौरेषु—"नृपं व्यसने प्रक्षिप्य महामन्त्री दीर्घदर्शी साम्प्रतं राज्ञः श्रियं स्वयं भुङ्क्ते" इति जनवादे समुत्थिते, स मन्त्री स्वगेहिनीं मेधाविनीं प्राब्रवीत्,—"प्रिये! राजनि सुखासक्ते, तद्भारं वहतोऽपि,—'राज्यं भक्षितमनेन" इति महदयशो मे समुत्पन्नं जनेषु; लोकवादो हि महतामपि दोषमावहति, रामोऽपि जनापवादेन जानकीं त्याजितो न किम्? तन्मया किं कर्त्तव्यमधुना?"। इति मन्त्रिणाऽभिहिते भार्य्या मेधाविनी धीरा अन्वर्थनाम्नी तं पतिमभाषत,—"नाथ! तीर्थयात्राऽपदेशेन युक्त्या महीपतिमापृच्छस्व,—'कियन्तं कालं विदेशं गन्तुं मे वृद्धस्येदानीं युक्तं, तदनुमन्यताम्' इति। एवं हि निःस्पृहस्य ते स जनवादो निवर्त्तिष्यते; त्वयि चास्थिते राजा स्वयं राजधुरामुद्वक्ष्यति; ततश्च शनैरस्य व्यसनित्वञ्च शान्तिमेष्यति; आगतस्य च पुनस्ते सा एव मन्त्रिता अनिन्द्या भविता"।

इति भार्य्यया अनुशिष्टो महामन्त्री "तथा" इति कथा-

---

इसके बाद पुरवासियों में—"राजा को स्त्रीसम्भोग आदि दुर्व्यसनों में डालकर महामन्त्री दीर्घदर्शी इस समय राजलक्ष्मी का उपभोग स्वयं कर रहा है" यह लोकापवाद फैलने पर उस मन्त्री ने मेधाविनी नामवाली अपनी पत्नी को कहा—"प्रिये! राजा के सुख में आसक्त हो जाने पर उसका भार वहन करने पर भी मेरा जनता में "यह राज्य को खा गया" इस प्रकार का बहुत बड़ा अपयश उत्पन्न हो गया है; लोकापवाद तो बड़े लोगों में भी दोष उत्पन्न कर देता है। राम ने भी जनापवाद से सीता का त्याग नहीं किया क्या? तो मैं इस समय क्या करूँ"। यह मन्त्री के द्वारा कहे जाने पर धैर्यशालिनी सार्थक नामवाली मेधाविनी पत्नी ने उस को कहा—"नाथ! तीर्थयात्रा के बहाने की युक्ति से राजा को निवेदन करिये कि 'मुझ वृद्ध के लिये इस समय कुछ समय के लिये विदेश जाना उचित है, इसके लिये आज्ञा दीजिये'। इस प्रकार आप के निःस्पृह होने से वह लोकापवाद दूर हो जायगा। आप के न रहने से राजा राज्य का भार स्वयं वहन करेगा। तब धीरे धीरे इसकी सुखासक्ति भी धीमी पड़ जायगी। फिर आने पर आप का वह मन्त्री का पद अनिन्दित रूप से रहेगा"।

इस प्रकार पत्नी के द्वारा विचार दिया हुआ उस महामन्त्री ने "वैसा ही करूँगा" यह निश्चित करके बातचीत के प्रसङ्ग से उस यशःकेतु राजा

नाहमस्या अभिमतोऽस्मीति हृदाऽकरोत्, अवादीच्च,—"सुन्दरि! यदि तेऽहं नाभिमतः, तत्ते योऽभिमतः, तं सेवितुं गच्छ"। तदाकर्ण्य सा नतमुखी शनैरवादीत्,—"नाथ! त्वं मे प्राणाधिकः प्रेयान्, किन्तु मे विज्ञप्तिमेकां शृणु, सहर्षं मे अभयं प्रयच्छ, शपथञ्च कुरुष्व, आर्य्य-पुत्र! अवक्तव्यमपि ते वदामि"। एवमुक्तवती सा "तथा" इति कृच्छ्रात् प्रतिपद्यमानं तं सविषादं सलज्जं सभयञ्चावादीत्,—"नाथ! एकदा एकाकिनीं गृहोद्याने मां दृष्ट्वा धर्मदत्तो नाम मम भ्रातुः सखा युवा स्मराऽऽतुरः मामरुणत्। अहं परीवादं पितुः कन्यादानफलञ्च रक्षन्ती हठप्रवृत्तस्य तस्य वाचमयच्छं यत्,—'पूर्वं विवाहिता त्वामुपे-ष्यामि, ततः पतिम्' इति। तत् प्रभो! मे सत्यं प्रतिपालय, अनुमन्यस्व मां तदन्तिकगमनाय, तन्निकटं गत्वा क्षणेनागमिष्यामि, न हि आबाल्यसेवितं सत्यमतिक्रमितुं शक्नोमि"। इति तस्याः वचोवज्र-पातेन सहसा हतः समुद्रदत्तः सत्येन बद्धः क्षणमचिन्तयत्,—"अहो! धिक्! इयमन्यरक्ता, एतया ध्रुवमेव गन्तव्यं, तत् कथं सत्यं हन्मि?

---

उसने अपने मन में सोचा कि मैं इसका मनोऽनुकूल नहीं हूँ। और उसने कहा कि—"हे सुन्दरी! यदि मैं तुम्हारे मन के अनुरूप नहीं हूँ, तो जो तुम्हारे मन का अनुकूल है उस की सेवा के लिये चली जाओ"। यह सुन कर शिर झुकाये हुए उसने धीरे धीरे कहा—"हे नाथ! तुम मेरे प्राणों से बढ़ कर प्रिय हो; किन्तु मेरी एक प्रार्थना सुनो और प्रसन्नता के साथ मुझे अभय दान दो और शपथ करो तब हे पतिदेव! अकथनीय विषय होने पर भी तुम्हें कहूँगी"। यह कहने वाली उस ने "वही होवे" इस रूप में मुश्किल से स्वीकार करने वाले उस को विषाद, लज्जा तथा भय के साथ कहा—"नाथ! एकबार घर के पास के बगीचे में अकेली मुझे देख कर मेरे भाई का मित्र धर्मदत्त नाम का युवक कामपीड़ित होकर मुझे रोक लिया। अपने अपवाद को तथा पिता के कन्यादान के फल को बचाती हुई मैंने उस को वचन दे दिया कि—'विवाह होने पर पहले तुम्हारे पास आऊँगी तब पति के पास जाऊँगी'। तो हे प्रभो! मेरे सत्य की रक्षा करो, उस के पास जाने के लिये मुझे आदेश दो, उसके पास जाकर कुछ ही देर में आ जाऊँगी, बचपन से जिस सत्य की सेवा कर रही हूँ उसका उल्लंघन नहीं कर सकूँगी"। उसके इस वचनरूपी वज्रपात से एकाएक ताडित हुए और सत्य से बँधे हुए समुद्र-दत्त ने क्षण भर सोचा—"अरे! धिक्कार होवे! यह तो दूसरे पर अनुरक्त है, यह तो अवश्य जायगी, तो क्यों अपने सत्य का भङ्ग करूँ? यह जाय,

प्रसङ्गेन तं नृपं यशःकेतुं व्यज्ञापयत्,—"राजन्! अनुजानीहि मां, कांश्चिदपि दिवसानहं तीर्थयात्रार्थमितो व्रजामि, धर्मो हि मे परमो मतः"। तदाकर्ण्य स राजाऽब्रवीत्,—"मन्त्रिन्! मा मैवं, तीर्थैर्विना अपरो दानादिः किं न धर्म्मः? स्वगृहेष्वपि तेन स्वर्गसाधनं किं न स्यात्?"। अथ मन्त्री तमवोचत्,—"देव! दानादौ अर्थशुद्ध्यादिकं मृग्यते, तीर्थानि तु नित्यशुद्धानि, यावच्च यौवनं, तावदेव धीमता गम्यानि, नो चेत् अविश्वास्ये अस्मिन् शरीरे कुतस्तैः सह सङ्गमः?"। इति तस्मिन् मन्त्रिणि वदति, राज्ञि च तत् निषेधति, प्रविश्य प्रतीहारी तं राजानं व्यजिज्ञपत्,—"देव! भगवानंशुमान् व्योमसरोमध्यमवगाहते, तदुत्तिष्ठ, स्नानवेला तेऽतिवर्त्तते"। एतदाकर्ण्य राजा सहसा स्नातुमुदतिष्ठत्। यात्रान्मुखः स मन्त्री च तं प्रणम्य गृहमगात्। तत्र तां भार्य्याम् अनुगन्तुमानसां निवार्य्य, स्वभृत्यैरपि अतर्कितः स्वयुक्त्या यात्रामकरोत्।

क्रमेण च एकाकी तान् तान् देशान् तीर्थानि च भ्रमन् ओड्रविषयं प्रापत्। तत्र अब्धेरदूरे एकं पत्तनं प्राप्य, तत्र

---

को निवेदन किया—"महाराज! मुझे आदेश दीजिये, कुछ दिन मैं तीर्थ यात्रा के लिये यहाँ से जाऊंगा, क्यों कि मुझे धर्म बहुत प्रिय है"। यह सुन कर उस राजा ने कहा--"हे मन्त्री! ऐसा मत करिये, तीर्थों के विना दूसरा दान आदि क्या धर्म नहीं होगा?"। इसके बाद मन्त्री ने उसको कहा---"महाराज! दान आदि में धन की शुद्धता अपेक्षित है, तीर्थ तो सदा शुद्ध रहते हैं, जब तक यौवन है, तब तक ही बुद्धिमानों को तीर्थों में जाना चाहिये, नहीं तो, इस शरीर के अविश्वसनीय होने से कैसे उन तीर्थों से सङ्गम होगा?"। यह मन्त्री के कहते रहने पर तथा राजा के निषेध करते रहने पर द्वाररक्षिका ने आकर उस राजा को निवेदन किया---"महाराज! भगवान् सूर्य आकाश रूपी सरोवर के मध्य में प्रवेश कर रहे हैं, तो उठिये, आपके स्नान का समय बीत रहा है"। यह सुन कर राजा एकाएक स्नान के लिये उठ गया। और वह मन्त्री भी यात्रा के लिये उद्यत होकर उन्हें प्रणाम करके घर गया। वहाँ साथ जाने की इच्छावाली पत्नी को रोक कर अपने नौकरों से भी अनुपलक्षित होकर अपनी युक्ति से प्रस्थान कर दिया।

क्रमशः अकेले उन-उन देशों तथा तीर्थों में भ्रमण करता हुआ वह ओड्र देश में पहुँचा। वहाँ समुद्र के समीप ही एक नगर में जाकर वहाँ एक

यातु इयं, कोऽस्याः परिग्रहः?" इत्यालोच्य तां यथेष्टगमनाय अनुमेने। साऽपि सहसा समुत्थाय तस्माद् वेश्मनो निरगात्।

अथ सा यान्ती मदनसेना निशि मार्गे एकाकिनी केनापि चौरेण प्रधाव्य वसनाञ्चलाद् रुरुधे, ऊचे च बिभ्यती सा,—"का त्वं सुभ्रु।? क यासि?" इति। साऽवादीत्,—"मुञ्च मां, किं तवानेन प्रसङ्गेन? कार्य्यमस्ति मे"। ततश्चौरोऽब्रवीत्,—"सुन्दरि! चौरात् मत्तः कथं त्वं मुच्यसे?"। तदाकर्ण्य साऽवदत्,—"गृहाण मे आभरणानि"। ततश्चौरः अभ्यधात्,—"शोभने! किमेभिरुपलैः? चन्द्रकान्ताननां जगदाभरणभूतां भवतीं नैवाहं त्यजामि"। इति तेनोक्ता विवशा सा वणिङ्नन्दिनी निजवृत्तान्तमाख्याय तमेवं प्रार्थयामास,—"भद्र! क्षणम् अपेक्षस्व, यावत् सत्यमनुपालयामि; इहस्थस्यैव ते पार्श्वं सत्वरमेष्यामि, नाहमिमां गिरमुल्लङ्घयिष्यामि"। एतदाकर्ण्य चौरस्तां सत्यसन्धां मत्वा मुमोच, तस्थौ च तत्र तदागमं प्रतीक्षमाणः। साऽपि तस्य धर्मदत्तस्य वणिजोऽन्तिकमाजगाम। स च धर्मदत्तस्ताम् अभीष्टां

---

इसका कैसा उपरोध?" यह विचार कर उसको अपनी इच्छा के अनुसार जाने के लिये उसने आज्ञा दे दी। वह भी एकाएक उठकर उस घर से निकल गयी।

इसके बाद रात के समय रास्ते में अकेली जाती हुई वह मदनसेना किसी चोर के द्वारा दौड़ कर वस्त्र का आँचल पकड़ कर रोक ली गई और डरती हुई वह कही गयी—"हे सुन्दरी! तुम कौन हो? कहाँ जा रही हो?" उसने कहा—"मुझे छोड़ दो, इस बात से तुम्हें क्या प्रयोजन! मुझे जरूरी कार्य है"। तब चोर ने कहा—"हे सुन्दरी! मुझ चोर से तुम कैसे छोड़ी जाओगी?" यह सुनकर उसने कहा कि—"मेरे सभी आभूषण ले लो"। तब चोर ने कहा—"हे शोभने! इन पत्थरों से क्या लाभ? चन्द्रमा के समान मुह वाली, संसार का आभूषण बनी हुई तुम को मैं नहीं छोड़ूँगा"। यह उसके द्वारा कही हुई वह वणिक्पुत्री विवश होकर अपना समाचार कह कर उससे इस प्रकार प्रार्थना करने लगी—"हे भले आदमी! क्षण भर प्रतीक्षा करो; जब तक मैं सत्य का पालन करती हूँ। यहीं पर रहते हुए तुम्हारे पास मैं शीघ्र आऊँगी, मैं इस वचन का उल्लंघन नहीं करूँगी"। यह सुन कर वह चोर उसको सत्यप्रतिज्ञावाली समझ कर छोड़ दिया और वहीं रह कर उसके आगमन की प्रतीक्षा करने लगा। वह भी उस धर्मदत्त वणिक् के पास आ गयी। उस धर्मदत्त ने उस प्रियतमा को आई हुई देख

चैकं शैवं मन्दिरं प्रविश्य तत्प्राङ्गणे उपाविशत्। तत्र तम् अर्ककर-सन्तप्तं दूराध्वभ्रमणधूसरं निधिदत्तो नाम देवार्चनाऽऽगतः कश्चिद् वणिग् ददर्श। स तं तथाविधं दृष्ट्वा सयज्ञसूत्रं सुलक्षणं द्विज-श्रेष्ठं सम्भाव्य आतिथ्यार्थं स्वं गृहमनयत्, अपूजयच्च स्नानभोजनाद्यैः, अप्राक्षीच्च विश्रान्तं,—"कस्त्वम्? कुत आयातः? क्व यासि?" इति। सोऽब्रवीत्,—"अहं दीर्घदर्शी नाम विप्रः, अङ्गदेशादिह आयातस्तीर्थयात्रार्थी" इति। ततः स महावणिक् निधिदत्तस्त-मब्रवीत्,—"अहं वणिज्यया सुवर्णद्वीपं गन्तुमुद्यतः, त्वं ताव-दस्मद्गृहे तिष्ठ, यावदहम् आगमिष्यामि; तीर्थयात्रापरिश्रान्तोऽसि, अत्र कञ्चित् कालं विश्रम्य ततो यास्यसि" इति। तदाकर्ण्य स दीर्घ-दर्शी प्रत्यवादीत्,—"ममेह स्थित्या अलं, त्वयैव सह तत्राह-मपि गन्तुमिच्छामि"। ततस्तेन साधुना,— "एवमस्तु" इति कथिते स मन्त्री चिरादपास्तशयनो निशां तामनैषीत्।

अथान्येद्युस्तेन वणिजा सार्द्धं वारिधिं गत्वा तद्भाण्ड-

---

शिवमन्दिर में प्रवेश करके उसके आँगन में बैठ गया। वहाँ देवता की पूजा के लिए आये हुए निधिदत्त नामक किसी बनियाँ ने उसको सूर्य की किरणों से तपे हुए तथा दूरमार्ग-भ्रमण से धूसरित देखा। उसने उस प्रकार उसको देखकर यज्ञोपवीत तथा अच्छे लक्षणों से श्रेष्ठ ब्राह्मण समझ कर अतिथि-सत्कार के लिये अपने घर ले आया और स्नान-भोजन आदि से उसका सम्मान किया तथा विश्राम करने पर पूछा कि—"आप कौन हैं? कहाँ से आये हैं? कहाँ जायेंगे?"। उसने कहा—"मैं दीर्घदर्शी नाम का ब्राह्मण हूँ, तीर्थयात्रा के लिये अङ्गदेश से यहाँ आया हूँ"। तब उस महावणिक् निधिदत्त ने उसको कहा—"मैं व्यापार के लिये सुवर्णद्वीप जाने के लिये उद्यत हूँ, जब तक मैं लौट आता हूँ तब तक आप हमारे घर में ठहरिये। आप तीर्थ-यात्रा से थके हुए हैं, कुछ समय यहाँ विश्राम करके तब जाइयेगा"। यह सुनकर उस दीर्घदर्शी ने कहा—"मेरा यहाँ रहना व्यर्थ है, तुम्हारे साथ मैं भी वहाँ जाना चाहता हूँ"। तब उस महाजन के द्वारा—"तो ऐसा ही होवे" यह कहे जाने पर उस मन्त्री ने प्रभात होने से बहुत पहले ही बिस्तरा त्याग किये हुए उस रात को बिताया।

उसके बाद दूसरे दिन उस बनिये के साथ समुद्र में जाकर उसने उसके मूलधन से भरे हुए जलपोत पर आरोहण किया। उस जलयान से जाते हुए

प्राप्तां दृष्ट्वा यथावृत्तं पृष्ट्वा विचिन्त्य च क्षणमब्रवीत्,—"सुन्दरि! सत्येन ते तुष्टोऽस्मि, त्वया परस्त्रिया मे नास्ति प्रयोजनं, यावत् त्वां कश्चिन्नेक्षते, तावत् यथाऽऽगतं गम्यताम्" इति तेन त्यक्ता सा "तथा" इति तद्गेहात् प्रत्यागमत्।

अथ पथि चौरस्य प्रतिपालयतो निकटं प्राप्य,—"ब्रूहि कस्ते वृत्तान्तस्तत्र गतायाः?" इति पृच्छते तस्मै सा तेन वणिजा यथोक्तं, तत् सर्वमाख्यातवती। ततः चौरस्तामवादीत्,—"यद्येवं, तत् मयाऽपि सत्यतुष्टेन विमुक्ताऽसि, साम्प्रतं साभरणा गृहं व्रज" इति। एवं तेनापि सन्त्यक्ता रक्षिता अनृणा अलुप्तशीलमुदिता पत्युरन्तिकमाययौ। तत्र गुप्तं प्रविष्टा प्रहृष्टैवाऽऽगता पृष्टा तस्मै पत्ये तत् सर्वं यथावद्-वर्णयत। सोऽपि अम्लानमुखकान्तिन्तामसम्भोगलक्षणाम् अनष्टचारित्रां सत्यपालनगताम् अदुष्टमानसां सम्भाव्य अभिनन्द्य च तया सह यथासुखं तस्थौ"।

---

कर सब वृत्तान्त पूछ कर कुछ देर सोच कर कहा—"हे सुन्दरी! तुम्हारे सत्य से मैं सन्तुष्ट हूँ, तुझ परस्त्री से मेरा कोई प्रयोजन नहीं है, जब तक तुम को कोई नहीं देखता है, तब तक जैसे आयी हो, उसी प्रकार चली जाओ"। इस प्रकार उसके द्वारा त्याग की हुई वह "वैसा ही करूँगी" यह कह कर उसके घर से वापस लौट चली।

इसके बाद रास्ते में प्रतीक्षा करने वाले चोर के पास पहुँच कर—"कहो, वहाँ जाने पर तुम्हारा क्या वृत्तान्त हुआ?" यह पूछने वाले उस चोर को उसने उन बनिये के द्वारा जो कुछ कहा गया था वह सब कह दिया। तब चोर ने उसको कहा—"यदि ऐसी बात है तो सत्य से सन्तुष्ट होने वाले मेरे द्वारा भी तुम छोड़ दी गयी हो, इस समय आभरण-सहित तुम घर जाओ"। इस प्रकार उसके द्वारा भी सन्त्यक्त और सुरक्षित होकर, सत्य से उऋण तथा चरित्र नष्ट न होने से प्रसन्न होकर वह मदनसेना अपने पति के पास आ गयी। वहाँ गुप्तरूप से प्रवेश करके प्रसन्न होती हुई आई और पूछी गयी तब उस पति को वह सब वृत्तान्त उसने सही-सही सुना दिया। वह समुद्रदत्त भी उस मदनसेना को प्रसन्नमुखकान्तिवाली, बिना सम्भोग के चिह्नवाली, सुरक्षितचरित्रवाली, सत्यपालन के लिये गयी हुई, पवित्रमनवाली होने की सम्भावना करके इस विषय की प्रशंसा करके उसके साथ सुखपूर्वक रहने लगा"।

पूर्णं प्रवहणं समारुरोह। तेन प्रवहणेन गच्छन् अद्भुतभीषणाम् अम्भोधिं विलोकयन् क्रमेण तत् स्वर्णद्वीपमुपाययौ। तत्र च द्वीपे तेन क्रयविक्रयौ कुर्वता वणिजा निधिदत्तेन सह कञ्चित् कालमुवास। ततश्च तेन सह प्रत्यागच्छन् प्रवहणेन, तस्मात् सागरात् सहसा समुत्थितं प्रबालैः शाखासुभगैः जाम्बूनदोज्ज्वलैः काण्डैः मणिमयैः फलैः कान्तैश्च कुसुमैः सुशोभितं कल्पवृक्षमद्राक्षीत्; तस्य च स्कन्धे सद्रत्नपर्य्यङ्कोपरिस्थिताम् अत्यद्भुताकारां कमनीयां कामपि कन्यकामैक्षत। "अहो! किमेतत्!!" इति स मन्त्री यावत् ध्यायति स्म, तावत् सा कन्या वीणापाणिः गातुमुपचक्रमे,—"येन यत् कर्मबीजमुप्तं, स निश्चितं तत्फलं भुङ्क्ते, पूर्वकृतं हि कर्म विधिनाऽपि अन्यथा कर्त्तुं न शक्यते"। इति सङ्गीतार्थं प्रकटय्य क्षणादेव सा दिव्यकन्या कल्पद्रुमपर्य्यङ्कसहिता तत्रैव ममज्ज। किमप्येतदपूर्वमद्य मयेह दृष्टं, क्व अब्धिः? क्व च दृष्टनष्टोऽयं दिव्याङ्गनासहितस्तरुः? यदि च अब्धेरीदृश एव शश्वदाकारः, तदा लक्ष्मीन्दुपारिजाताद्याः अस्मात् न किमुद्गताः?" इति सञ्चिन्तयन्तं दीर्घदर्शिनं विलोक्य विस्मयाऽऽविष्टं कर्णधारादयोऽ-

---

आश्चर्यजनक तथा भयंकर समुद्र को देखते हुए वह क्रमशः उस सुवर्ण द्वीप में पहुँचा। और वहाँ उस द्वीप में खरीद-विक्री करते हुए उस बनियाँ निधिदत्त के साथ कुछ समय तक रहा। इसके बाद उसी के साथ जलयान के द्वारा लौटते हुए उसने उस समुद्र में से एकाएक निकले हुए नवीन पल्लव तथा सुन्दर डालियों से और सोने से चमकते हुए तने से मणिमय फलों से तथा सुन्दर फूलों से सुशोभित कल्पवृक्ष को देखा। फिर उसके कन्धे पर उत्तम रत्नों के पलंग के ऊपर बैठी हुई अत्यद्भुत आकृतिवाली किसी सुन्दरी कन्या को देखा। जब तक वह मन्त्री—"अरे! यह क्या!" इस प्रकार सोचता था तब तक वीणा हाथ में लिये हुए उस कन्या ने गाना प्रारम्भ किया—"जिसने जो कर्मबीज बोया है वह निश्चित रूप से उसका फल भोग करता है, पूर्व का किया हुआ कर्म विधाता के द्वारा भी हटाया नहीं जा सकता है" यह सङ्गीत का अर्थ प्रकट करके कुछ क्षण में वह दिव्यकन्या कल्पवृक्ष और पलङ्ग के साथ वहीं समुद्र में डूब गयी। यह तो कुछ अपूर्व ही आज मैंने यहाँ देखा है, कहाँ तो समुद्र? और कहाँ दिखाई देकर अलक्षित होनेवाला सुन्दरी कन्या से युक्त यह वृक्ष? यदि हमेशा समुद्र का यही स्वरूप है तो क्या लक्ष्मी, चन्द्रमा, पारिजात आदि इसमें से नहीं निकले हैं? इस प्रकार आश्चर्य से भरे हुए तथा सोचते हुए दीर्घदर्शी को देखकर नाविक

इति कथामुक्त्वा स वेतालस्तं भूपं पृच्छति स्म,—"राजन्! पूर्वोक्तं शापमनुस्मृत्य ब्रूहि, एषां चौरवणिजां मध्यात् कः त्यागी ?" इति। तदाकर्ण्य स राजा मौनं विहाय तं वेतालमाह स्म,—"एषां चौरस्त्यागी, न पुनरुभौ तौ वणिजौ। यो हि पतिस्ताम् अत्याज्यां विवाह्यापि अजहात्, स कुलजः सन् अन्याऽऽसक्तां भार्य्यां जानन् कथं वहति ?। योऽपि अपरः, स भयात्। अथवा कालेन जीर्णाऽऽसक्तिवेगात् तामत्याक्षीत् चौरस्तु गूढचारी निरपेक्षः पापी, प्राप्तं साभरणं स्त्रीरत्नं यदमुञ्चत्, तेन स एव त्यागी" इति। एतदाकर्ण्यैव स वेतालः पूर्ववत् स्वं पदमगात्, राजाऽपि पुनस्तमानेतुं सयत्नोऽभवत्।

---

यह कथा कह कर उस वेताल ने उस राजा को पूछा—"महाराज! पहले के कहे हुए शाप का स्मरण करके कहो कि इन चोर तथा दोनों बनियों में कौन अधिक त्यागी है ?"। यह सुन कर उस राजा ने मौन त्याग कर उस वेताल को कहा—"इन तीनों में चोर ही सबसे बड़ा त्यागी है, वे दोनों वणिक् नहीं। जो कि पति था उसने जो विवाह करके भी न त्याग करने योग्य उस पत्नी को दूसरे के पास जाने के लिये छोड़ दिया, सो तो वह अच्छे कुल का पुत्र था दूसरे के ऊपर आसक्त पत्नी को जानते हुए भी कैसे ग्रहण करे ? जो कि दूसरा वणिक् था उसने भय से अथवा कुछ समय बीत जाने के कारण आसक्ति के वेग के क्षीण होने से उसे छोड़ दिया। चोर तो गुप्त रूप से विचरण करने वाला, किसी की अपेक्षा नहीं रखने वाला पापी था, उसने जो मिले हुए आभरण-सहित स्त्री-रत्न को छोड़ दिया, इस से वही सबसे बड़ा त्यागी था"। यह सुनते ही वह वेताल पहले की तरह अपने स्थान पर चला गया। राजा भी फिर उसको लाने के लिये प्रयत्न करने के लिये गया।

ब्रुवन्,—"भद्र ! एवमेषा वरकन्यका सदैव इह दृश्यते, निमज्जति च क्षणेन, तव तु अस्या नवं दर्शनम्" इति तैरुक्तः स मन्त्री सविस्मयस्तेन निधिदत्तेन समं पोतात् सागरतीरमाससाद। तत्र उत्तारितभाण्डेन तेन वणिजा हृष्टभृत्येन सह स मन्त्री तद्गृहं गत्वा बहून् दिवसान् तत्र सुखेन स्थित्वा तं निधिदत्तमुवाच,—"सार्थवाह ! भवद्गेहे अहं चिरं सुखेन विश्रान्तः, इदानीं स्वदेशं गन्तुमिच्छामि, भद्रमस्तु ते" इत्युक्त्वा तमनिच्छन्तमपि वणिक्पतिमामन्त्र्य स दीर्घदर्शी सत्त्वमात्रसहायस्ततः प्रतस्थे।

क्रमेण नानादेशानतिक्रमन् निजम् अङ्गविषयं प्रायात्। तत्र यशःकेतुना राज्ञा तदन्वेषणाय नियुक्ताः चारा बहिर्नगरमागतं तं ददृशुः। ततस्तैर्विज्ञप्तो राजा तद्विश्लेषसुदुःखितः स्वयं नगरात् निर्गत्य तमभ्यगात्। ततश्चोपेत्य परिष्वज्य अभिनन्द्य च अध्वश्रमक्षामधूसरं तम् अभ्यन्तरमनयत् अब्रवीच्च तं विश्रान्तं,—"मन्त्रिन् ! अस्मान् त्यक्त्वा त्वया किमर्थं यावच्छरीरं

---

आदिकों ने कहा—"महाशय ! इसी प्रकार यह सुन्दरी कन्या बराबर यहाँ दिखाई देती है, और क्षण भर में डूब जाती है, आप को तो इसका नवीन दर्शन हुआ है" यह उनके द्वारा कहे जाने पर विस्मित होते हुए वह मन्त्री उस निधिदत्त के साथ जहाज से समुद्र के किनारे पहुँचा। वहाँ अपना सामान उतारे हुए प्रसन्न नौकर वाले उस वणिक् के साथ उस मन्त्री ने उसके घर जाकर बहुत दिनों तक वहाँ सुख से रहकर उस निधिदत्त को कहा—"सेठ जी ! आप के घर में मैंने बहुत दिनों तक सुख से विश्राम किया, अब अपने देश को जाना चाहता हूं, आपका भला होवे" यह कहकर न चाहते भी उस सेठ को निवेदन करके केवल अपने साहस को साथी बनाकर वह दीर्घदर्शी वहाँ से प्रस्थान कर दिया।

क्रमशः अनेक देशों को पार करते हुए वह मन्त्री अपने अङ्गदेश में पहुँचा। वहाँ यशःकेतु राजा के द्वारा उसके अन्वेषण के लिये नियुक्त किये हुए गुप्तचरों ने नगर के बाहर आये हुए उसको देखा। तब उन लोगों के द्वारा निवेदन किये हुए तथा उसके वियोग के दुःख से दुखी वह राजा स्वयं नगर से बाहर आकर उसके पास गया। तब उसके पास जाकर आलिङ्गन तथा स्वागत करके मार्गश्रम से थके हुए तथा धूलि से धूसरित उस मन्त्री को राजा ने महल के अन्दर लाकर विश्राम करने के बाद कहा—"हे मन्त्री ! हम लोगों को छोड़कर क्यों तुमने शरीरसहित मन को इस

# अथ एकादश कथा

ततः स राजा शिंशपासकाशं गत्वा तं वेतालं पुनः स्कन्धमधिरोप्य तं भिक्षुं प्रति आगन्तुमारेभे। गच्छन्तञ्च तं स्कन्धस्थितः स वेतालः प्राब्रवीत्,—"राजन्! विचित्रमेकां श्रमापहां कथां ते निवेदयामि, शृणु,—

पूर्वमासीत् उज्जयिन्यां धर्मध्वजो नाम नृपतिः। तिस्रः राजकन्यास्तस्यातिवल्लभा भार्य्या आसन्। तासामेका इन्दुलेखा, द्वितीया तारावली, तृतीया मृगाङ्कवती। ताभिः राज्ञीभिः सह विहरन् राजा जिताशेषरिपुः सुखमासाञ्चक्रे।

एकदा तत्र वसन्तोत्सवे समुपस्थिते ताभिः प्रियाभिः सह स राजा क्रीडितुम् उद्यानमगात्। तत्र अलिमालामौर्वीकाः पुष्पाऽऽनता लताः अनङ्गस्य सज्जिताश्चापयष्टीरिव पश्यन्, तत्रत्यतरूपरि वर्त्तमानानां कोकिलानां गिरं सम्भोगैकरसस्य मनोजस्य आज्ञामिव शृण्वन्,

---

## ग्यारहवीं कथा—

इसके बाद उस राजा ने शीशम के पास जाकर उस वेताल को फिर कन्धे पर उठा कर उस संन्यासी के प्रति आना प्रारम्भ किया और जाते हुए उसको कन्धे पर स्थित वेताल ने कहा—"महाराज! परिश्रम दूर करने वाली एक विचित्र कथा तुम्हें निवेदन करता हूँ, सुनो—

पहले उज्जयिनी में धर्मध्वज नाम का एक राजा था। तीन राजकुमारियाँ उसकी अत्यन्त प्रिया पत्नी थीं। उनमें एक इन्दुलेखा, दूसरी तारावली, तीसरी मृगाङ्कवती थी। उन रानियों के साथ विहार करता हुआ, समस्त शत्रुओं का जीतने वाला वह राजा सुख से रहता था।

एक बार वहाँ वसन्तोत्सव आने पर उन प्रियतमाओं के साथ वह राजा विहार करने के लिये वाटिका में गया। वहाँ प्रत्यञ्चा के सदृश भ्रमरों की पंक्तिवाली फूलों से झुकी हुई लताओं को कामदेव के सुसज्जित धनुषदण्ड के समान देखते हुए, वहाँ के पेड़ों के ऊपर रहने वाली कोयलों की वाणी एकसम्भोग ही के प्रेमी कामदेव की आज्ञा के सदृश सुनते हुए, इन्द्र के समान

निःस्नेहपरुषामिमां दशां मानसं नीतम् ? अथवा भगवती भवितव्यस्य गतिं विचित्रां को विज्ञातुमर्हति ? येन अकस्मात् ते तीर्थादिभ्रमणे मतिरेषाऽभवत्; तद् ब्रूहीदानीं के त्वया देशा भ्रान्ताः ? किञ्च नवं वस्तु दृष्टम् ?" इति। ततः स क्रमाद् वर्णयन् सुवर्णद्वीपान्तम् अध्वानम्, अब्धौ समुत्थितां गायन्तीं त्रिजगत्सारभूतां कल्पतरुस्थितां तां दिव्यकन्यकां तस्मै यथावदकथयत्।

राजा तु तत् श्रुत्वैव तथा स्मरवशोऽभवत्, यथा तया विना राज्यजीविते निष्फले अमन्यत; अवदच्च तं मन्त्रिणम् एकान्ते नीत्वा,—"मन्त्रिन्! मयाऽवश्यमेव सा द्रष्टव्या, नो चेद् मे जीवितं नास्तीत्यवधारय; भवितव्यतां प्रणम्य त्वदुक्तेन पथा गच्छामि, अहं ते न निवारणीयः, नानुगम्यश्च; गुप्तमेकाकी गच्छामि, राज्यन्तु मे त्वया रक्ष्यम्, इदञ्च मद्वचो नान्यथा कार्य्यं, मया असुभिः शापितोऽसि" इत्युक्त्वा तत्प्रतिवादं निरस्य तं मन्त्रिणं विससर्ज्ज। तदा स दीर्घदर्शी अनल्पोत्सवेऽपि विमना इव आसीत्; स्वामिनि असाध्यव्यसनासक्ते सन्मन्त्रिणां कुतः सुखम् ?।

---

स्नेहरहित कठोर दशा को प्राप्त कराया ? अथवा भगवती भवितव्यता की गति विचित्र है उसे कौन जान सकता है ? जिससे एकाएक तीर्थादिभ्रमण में तुम्हारी इस प्रकार की बुद्धि हो गयी। तो कहो इस समय कि किस-किस देश में तुमने भ्रमण किया ? और कौन सी नवीन वस्तु देखी ?"। तब उसने क्रमशः वर्णन करते हुए सुवर्णद्वीप-पर्यन्त रास्ता, समुद्र में बाहर निकली हुई, गीत गाती हुई, कल्पवृक्ष पर बैठी हुई, तीनों भुवनों के सारभूत उस उस दिव्य कन्या को भी उसे यथार्थ रूप में कह दिया।

राजा तो वह सुनते ही उस प्रकार कामाधीन हो गया जिससे उसके बिना राज्य और जीवन को निष्फल मानने लगा और उस मन्त्री को एकान्त में ले जाकर कहा—"हे मन्त्री! मैं अवश्य उसको देखूँगा, नहीं तो 'मैं नहीं जीऊँगा' यह समझ लो। भवितव्यता को प्रणाम करके तुम्हारे कहे हुए मार्ग से जाऊँगा। तुम मुझे मत रोको; न तो मेरा अनुसरण करो। गुप्त रूप से अकेला ही जाऊँगा। मेरे राज्य का पालन तो तुम करना। इस मेरे वचन के विपरीत कार्य मत करो, मैं अपने प्राणों का शपथ तुम्हें दे रहा हूँ" यह कहकर उसके प्रत्युत्तर का खण्डन करके उस मन्त्री को वहाँ से विदा किया। व वह दीर्घदर्शी विशाल उत्सव होने पर भी उदास ही रहता था। स्वामी के असाध्य दुर्व्यसन में आसक्त होने पर अच्छे मन्त्रियों को सुख कहाँ मिलता है।

अथान्येद्युः स राजा तस्मिन् मन्त्रिणां वरे न्यस्तराज्यभारः निशि तापसरूपधरः यशःकेतुः स्वात् नगरात् प्रतस्थे। गच्छंश्च स पथि कुशं नाम मुनिमपश्यत्। सोऽपि तं प्रणतं तापसकल्पं समादिशत्,—"वत्स! लक्ष्मीदत्तेन वणिजा साकं पोतेन वारिधौ गत्वा अभीष्टां कन्यां प्राप्स्यसि, निराकुलो व्रज"। इति तद्वचनं श्रुत्वा हृष्टः प्रणम्य च तं राजा गच्छन् देशान् नदीः अद्रींश्चातिक्रम्य तमम्बुधिमाससाद; तस्य च तीरे मुनिप्रोक्तेन तेन लक्ष्मीदत्तेन स्वर्णद्वीपं यियासुना वणिजा सहसा अस्य सङ्गतिरजायत; तेन च चक्राङ्कपादमुद्रादिदर्शनात् प्रह्वेन सह स नृपः प्रवहणमारुह्य अम्बुधौ प्रतस्थे। सम्प्राप्ते मध्यमब्धेस्तस्मिन् प्रवहणे, सहसा कल्पविटपि-स्कन्धाधिरूढा सा कन्यका उदगात्। यावत् राजा चकोरश्चन्द्रिकामिव तां पश्यति, तावत् सा तथैव वल्लकीवाद्यसङ्गतं गायति स्म,—"यत् कर्मबीजं येन प्रागुप्तं, तत्फलं तेन निश्चितं भोक्तव्यं, पूर्वकृतं हि विधिरपि नान्यथा कर्त्तुं प्रभवति; तस्मात् यत्र यथावत् यस्य यत्

---

इसके बाद किसी दिन राजा यशःकेतु ने उस श्रेष्ठ मन्त्री के ऊपर राज्य का भार सौंप कर रात में तपस्वी का वेश धारण करके अपने नगर से प्रस्थान किया। जाते हुए उसने रास्ते में कुश नामक मुनि को देखा। उसने भी तपस्वी के समान प्रणाम करते हुए उसको आदेश दिया—"वत्स! लक्ष्मी-दत्त बनियाँ के साथ जहाज के द्वारा समुद्र में जाकर उस ईप्सित कन्या को प्राप्त करोगे, शान्त होकर जाओ"। यह उसका वचन सुनकर प्रसन्न होकर और उसे प्रणाम करके जाते हुए उस राजा ने देशों को, नदियों को और पहाड़ों को पार करते हुए उस समुद्र को प्राप्त किया। उसके तीर में मुनि के बताये हुए सुवर्णद्वीप जाने वाले उस लक्ष्मीदत्त बनिये के साथ इसकी सङ्गति हो गयी। चक्र के चिह्न से अङ्कित पैरों के चिह्न आदि के देखने से विनीत बने हुए उस बनिये के साथ उस राजा ने जलयान पर चढ़कर समुद्र में प्रस्थान किया। उस जहाज के समुद्र के मध्य में पहुँचने पर एकाएक कल्पवृक्ष के कन्धे पर बैठी हुई वह कन्या बाहर निकली। जब तक चन्द्रमा को चकोर के समान वह राजा उसको देखता है तब तक उसने उसी प्रकार वीणा के शब्द से मिश्रित संगीत गाना प्रारम्भ किया—"जो कर्मबीज जिसने पहले बोया है, उसका फल उसको अवश्य भोग करना है। पूर्व के किये हुए का परिवर्तन विधाता भी नहीं कर सकते हैं। इसलिये जहाँ पर जिस प्रकार का जिसका दैवयोग से जो भवितव्य है, वहाँ उस भवितव्य के द्वारा वह

## अथ त्रयोदशकथा।

अथ राजा पुनः शिंशपामूलं गत्वा तं वेतालं स्कन्धमारोप्य पूर्ववत् प्रातिष्ठत। गच्छन्तञ्च तं पुनर्वेतालः प्राब्रवीत्,—"राजन्! शृणु संक्षिप्तामेकां कथाम्,—

अस्ति वाराणसी नाम पुरी। तत्र देवस्वामीति राजमान्यो द्विजः कश्चित् प्रतिवसति स्म। तस्य महाधनस्य हरिस्वामीति सुतोऽभवत्। तस्य लावण्यवती नाम उत्तमा पत्नी आसीत्, यां तिलोत्तमादिसुराङ्गनानिर्माणेन शिक्षितकौशलो विधिरनर्घरूपलावण्यैर्विनिर्ममे। कदाचित् स हरिस्वामी तया कान्तया चन्द्रांशुशीतले हर्म्ये रतिश्रान्तो निद्रां ययौ। तस्मिंश्च काले कामचारी मदनवेगो नाम विद्याधरकुमारः तेन पथा नभसि सञ्चरन् तत्र समायात्, अपश्यच्च तां लावण्यवतीं पत्युः पार्श्वे सुप्ताम्। स तु दृष्ट्वैव तां सुप्तामेव गृहीत्वा नभोमार्गेण प्रायात्।

---

### तेरहवीं कथा—

इसके बाद राजा फिर शीशम की जड़ में जाकर उस वेताल को कन्धे पर उठाकर पहले के समान चल दिये। तब जाते हुए उसको फिर वेताल ने कहा—

"महाराज! एक छोटी सी कहानी सुनो—

वाराणसी नाम की नगरी है। वहाँ राजा से सम्मानित देवस्वामी नाम का कोई ब्राह्मण रहता था। महाधनी उस देवस्वामी ब्राह्मण का हरिस्वामी नाम का पुत्र था। उसकी लावण्यवती नाम की सुन्दरी पत्नी थी, तिलोत्तमा आदि अप्सराओं के निर्माण करने से कौशल सीखने वाले विधाता ने अपरिमित सौन्दर्य तथा लावण्यों से जिसका निर्माण किया था। किसी दिन वह हरिस्वामी उस प्रियतमा के साथ चन्द्रमा की किरणों से शीतल महल के छत पर सम्भोग से थककर निद्रित हो गया। उसी समय में स्वेच्छा से विचरण करने वाला मदनवेग नाम का विद्याधर-कुमार उसी रास्ते से आकाश में विचरण करता हुआ वहां आया और पति के बगल में सोयी हुई उस लावण्यवती को उसने देखा। वह तो देखते ही सोयी रहने पर ही उसको पकड़ कर आकाश-मार्ग से चला गया।

दैवयोगेन भवितव्यं, तत्र तेन भवितव्येनासौ जन्तुर्विवशो नीयते" इति सूचितभाव्यर्थां गीतिकां गायन्तीं तां पश्यन् राजा तत्क्षणं स्मरशराहतः निस्पन्द एवातिष्ठत्। "हे रत्नाकर! तुभ्यं नमोऽस्तु, येन त्वया इमां प्रच्छाद्य श्रिया हरिर्विप्रलब्धः, तत् त्वां शरणं प्रपन्नोऽस्मि, त्वं मे इष्टसिद्धिं विधत्स्व"। यावदित्थं स राजा समुद्रं स्तौति स्म, तावत् सा कन्यका सपादपा तत्र न्यमज्जत्। तदवलोक्यैव स राजा तामनु आत्मानं सिन्धौ प्राक्षिपत्। तद्वीक्ष्य स सज्जनः लक्ष्मीदत्तः तं विनष्टं मत्वा दुःखात् देहं त्यक्तुं समुद्यतोऽभवत्। 'मा तावत् साहसं कार्षीः, मग्नस्यास्य अम्बुधौ भयं नास्ति, एष राजा यशःकेतुर्नाम तापसरूपभृत्, अस्या एव कन्याया अर्थे समायातः, इयं हि अस्य पूर्वभार्य्या, एतां प्राप्य पुनरसौ अङ्गराज्यं गमिष्यति" इति गगनादुद्गतया वाचा समाश्वासितोऽसौ सार्थवाहः यथाकाममिष्टं देशं स्वार्थसिद्धये जगाम।

राजा यशःकेतुश्च अम्बुधौ मग्नः अकस्मात् दिव्यमेकं नगरमद्राक्षीत्। सविस्मयश्च तत् नगरं भास्वन्मणिमयस्तम्भैः काञ्चनो-

---

प्राणी विवश करके लाया जाता है" इस भवितव्य अर्थ की सूचना देने वाला गीत गाने वाली उस कन्या को देखता हुआ वह राजा निश्चेष्ट होकर खड़ा रह गया। "हे रत्नों के खजाना समुद्र! तुम्हें नमस्कार करता हूँ, जिस तुमने इस कन्या को छिपाकर लक्ष्मी के द्वारा विष्णु भगवान् को ठग लिया। इसलिये तुम्हारी शरण में पहुँचा हूँ, तुम मेरी ईप्सित की सिद्धि करो"। इस प्रकार जब तक वह राजा समुद्र की स्तुति कर रहा था तब तक वृक्षसहित वह कन्या वहीं समुद्र में डूब गयी। यह देखते ही उस राजा ने उसके पीछे अपने को समुद्र में डाल दिया। यह देखकर वह सज्जन लक्ष्मीदत्त उसको विनष्ट हुआ समझ कर दुःख से शरीरत्याग करने के लिये उद्यत हो गया।" "साहस मत करना, इसके समुद्र में डूबने पर भी कोई भय नहीं है। यह तपस्वी का रूप धारण करने वाला यशःकेतु नाम का राजा है, इसी कन्या के लिए यह आया है; क्योंकि यह इसके पूर्व जन्म की पत्नी है। इसे प्राप्त करके फिर यह अपने अङ्ग देश के राज्य में जायगा" आकाश से उत्पन्न इस वाणी के द्वारा आश्वासित होकर वह सेठ अपनी इच्छा के अनुसार अपने इच्छित देश को स्वार्थ-सिद्धि के लिये गया।

समुद्र में डूबे हुए राजा यशःकेतु ने अकस्मात् एक दिव्य नगर देखा। आश्चर्यित होकर चमकते हुए मणिमय खम्भों वाले, सुवर्ण से दीप्यमान

क्षणेन च प्रबुद्धो हरिस्वामी तां प्राणेश्वरीमपश्यन् ससम्भ्रमं शयनादुदतिष्ठत्,—"अहो! सा मम कान्ता क्व गता? कुपिता किं मयि? आहोस्वित् प्रच्छन्ना मच्चित्तं जिज्ञासुः क्वापि स्थिता परिहसति?" इत्येवं बहु वितर्कयन् व्याकुलः समन्तात् हर्म्यप्रासादवलभीषु अन्विष्यन् निशि अभ्रमत्, परम् आगृहोद्यानात् सर्वत्र चिन्वन् कुतोऽपि तां न प्राप। ततः शोकाग्निसन्तप्तः स सगद्गदं विललाप,—"हा! चन्द्रमुखि! हा! ज्योत्स्नासिताङ्गि! हा! प्रिये लावण्यवति! रात्र्या तुल्यगुणद्वेषात् अनया न सोढाऽसि?। त्वया कान्त्या जितो योऽयं चन्द्रः चन्दनशीतलैः करैः मामसुखयत्, सोऽयं त्वया विना लब्धान्तर इव तैरेव ज्वलद्भिरङ्गारैरिव विषदिग्धैराशुगैरिव मां तुदति"। इत्येवं विलपतस्तस्य हरिस्वामिनः सा निशा कृच्छ्रेण व्यरंसीत्, न तु विरहव्यथा। अथ प्रातः भास्वान् करैः विश्वस्य सन्तमसं बिभेद, परं तस्य हरिस्वामिनो मोहान्धतमसं न भेत्तुं चक्रमे। तीर्णनिशैश्चक्राह्वैरिव वितीर्णस्तस्य करुणाक्रऽऽन्दितध्वनिः शतगुणत्वं

---

कुछ ही देर में जागकर हरिस्वामी उस प्रियतमा को न देखकर घबड़ाहट के साथ बिस्तरे से उठा। "अरे! वह मेरी प्रिया कहाँ गयी? क्या मेरे ऊपर क्रोधित हो गयी है? अथवा मेरे मन को समझने के लिए छिपकर कहीं बैठी हुई उपहास कर रही है?" इस प्रकार बहुत वितर्क करते हुए व्याकुल होकर सब जगह अटारी, छत तथा छत पर की कोठरियों में खोजते हुए रात में भ्रमण किया, किन्तु घर के पास के बगीचे तक सब जगह खोजते हुए कहीं भी उसे नहीं प्राप्त किया। तब शोकानल से सन्तप्त होकर वह गद्गद स्वर से विलाप करने लगा—"हा! चन्द्रमा के समान मुख वाली! हा! चन्द्रिका के समान श्वेत अङ्गवाली! हा! प्रिये! लावण्यवती! क्या? बराबर गुण होने के द्वेष से इस रात्रि के द्वारा तुम नहीं सहन की जा सकी? तुम्हारे साथ रहने से तुम्हारी कान्ति से विजित जो यह चन्द्रमा चन्दन के समान शीतल किरणों से मुझे सुख पहुँचाता था, वही यह तुम्हारे न रहने से अवसर पाये हुए के सदृश जलते हुए अङ्गारों के समान, विष से भरे हुए मुखवाले बाणों के समान उन्हीं किरणों से मुझे पीड़ित कर रहा है"। इस प्रकार विलाप करते हुए उस हरिस्वामी की वह रात तो बड़ी कठिनाई से बीती, किन्तु विरह की व्यथा नहीं समाप्त हुई। इसके बाद प्रातःकाल होने पर सूर्य भगवान् अपनी किरणों से संसार का अन्धकार दूर किये किन्तु उस हरिस्वामी के मोहान्धकार को दूर करने में समर्थ नहीं हुए। रात बिताने वाले चक्रवाकों के द्वारा दिये हुए के समान उसका करुणरोदनध्वनि सौ

ज्ज्वलभित्तिभिः मुक्ताजालगवाक्षकैः प्रासादैः विराजमानं, नानारत्न-शिलाबद्धसोपानवापिकैः कामदैः कल्पवृक्षाढ्यै रुद्यानैरुपशोभितं दृष्ट्वा समृद्धेऽपि तत्र पुरे निर्जने गृहं गृहं प्रविश्य यदा तां प्रियां क्वापि न दृष्ट-वान्, तदा विचिन्वन् उत्तुङ्गमेकं मणिमन्दिरमारुह्य तद्द्वारमुद्घाट्य तत्र प्रविवेश। प्रविश्य च तत्र सद्रत्नपर्य्यङ्कस्थितां वस्त्राऽऽच्छादितस-र्वाङ्गां शयानाम् एककामैक्षिष्ट,—"किं स्यात् सैवेयम् ?" इति सोत्कण्ठं यावत् तन्मुखमुद्घाटयति, तावत् तामेव ईप्सितां कन्यकाम-द्राक्षीत्। तद्दर्शनेन चास्य तदा काऽपि अवस्था ग्रीष्मर्त्तुमरुपान्थस्य सरिद्दर्शनेनेवाभवत्। साऽपि उन्मीलितलोचना तं कल्याणाकृतिलक्षणं काम्यं प्राप्तं वीक्ष्य सम्भ्रमात् शयनमजहात्। ततश्च कृताऽऽतिथ्या आनतमुखी फुल्लेक्षणोत्पलन्यासैः पादयोः पूजयन्ती शनैरभ्यधात्,—"महाभाग! को भवान्? कथमिदमगम्यं रसातलं प्रविष्टोऽसि? राजलक्षणाङ्किततनोस्ते तापसव्रतं किमिदम्? महाभाग! यदि ते मयि प्रसादस्तदा एतदाख्याहि"।

---

दीवार वाले, मोतियों के जाल की खिड़की वाले महलों से सुशोभित, अनेक रत्न की शिलाओं से बनायी हुई सीढ़ियों से युक्त तालाबों वाले, सभी मनोरथ पूरा करने वाले, कल्पवृक्षों से भरे हुए उद्यानों से सुशोभित उस नगर को देखकर, सभी समृद्धियों से भरे हुए उस जनशून्य नगर में घर-घर में प्रवेश करके जब उस प्रियतमा को कहीं नहीं देखा तब खोजते हुए एक बहुत ऊँचे मणि के बने हुए भवन पर चढ़कर उसका दरवाजा खोलकर उसमें प्रवेश किया। उसमें प्रवेश करके अच्छे रत्नों के पलङ्ग पर स्थित, वस्त्र से सम्पूर्ण शरीर ढककर सोई हुई एक को देखा। "क्या यह वही होगी ?" इस रूप में उत्कण्ठित होकर जब उसने उसका मुंह खोला तब उस अपनी अभीष्ट कन्या को देखा। उसके दर्शन से ग्रीष्म ऋतु में मरुभूमि के पथिक को सरो-वर दिखाई पड़ने के सदृश उस समय इसकी कोई अनिर्वचनीय हर्ष की अवस्था हो गयी। उसने भी आँख खोलते ही सुन्दर स्वरूप तथा लक्षण वाले उस मनोहर पुरुष को आये हुए देखकर शीघ्रता से शय्या त्याग दिया। तब अतिथिसत्कार करके नम्रमुखी होकर नयनरूपी विकसित कमलों से उसके पैरों की पूजा करती हुई वह धीरे-धीरे कहने लगी—'महाशय! आप कौन हैं? इस अगम्य पाताल लोक में आप कैसे प्रवेश किये हैं? राजा के लक्षणों से चिह्नित शरीर वाले आप का यह तपस्वी व्रत कैसा है? महानुभाव! यदि मेरे ऊपर आप की कृपा हो तो यह कहिये"।

भेजे। स स्वजनैः सान्त्व्यमानोऽपि वियोगानलदीपितः तां प्रेयसीं विना धृतिं न लेभे; "इहानया स्थितम्, इह स्नातम्, इह प्रसाधनं कृतम्, इह च विहृतम्" इति इतस्ततः रुरोद। बन्धवः सुहृदश्च तमेवं प्राबोधयन्,—"न तावत् सा मृता, कथं वा त्वया आत्मा हन्यते? तदवश्यं तामवाप्स्यसि, धैर्य्यमवलम्बस्व, तां गवेषय च धीरस्य उद्योगिनोऽप्राप्यमिह नास्ति" इति। इत्येवं बोधितः स हरिस्वामी कृच्छ्रेण कैश्चित् दिनैः धृतिं बबन्ध, अचिन्तयच्च,—"सर्वस्वं ब्राह्मणसात् कृत्वा तीर्थानि तावत् भ्रमामि, पापसञ्चयञ्च क्षपयामि, पापक्षये जाते जातु तां प्रियां भ्राम्यन्नवाप्नुयाम्"। इत्यालोच्य स समुत्थाय स्नानादिकमकरोत्।

अन्येद्युश्च सत्रे विविधान्नपानानि कृत्वा अवारितं द्विजन्मनामभ्यवहारमकारयत्, धनानि च तेभ्यः सर्वाणि प्रादात्। ब्रह्मण्यमात्रवित्तश्च स्वदेशान्निर्गत्य प्रियां प्राप्तुं तीर्थानि भ्रमितुमगात्। भ्राम्यतश्च तस्य भीमो ग्रीष्मर्त्तुकेशरी प्रचण्डादित्यवदनो दीप्ततद्रश्मिकेशरः समाज-

---

गुणा बढ़ गया। वियोगानल से सन्तप्त उसने स्वजनों के द्वारा सान्त्वना दिये जाने पर भी उस प्रियतमा के बिना धैर्य नहीं प्राप्त किया। "यहाँ उसके साथ बैठे थे, यहाँ स्नान किये थे, यहाँ शृङ्गार किये थे, यहाँ विहार किये थे" यह कह कर यहाँ वहाँ रोता रहा। भाई बन्धु तथा मित्र लोग उसको इस प्रकार समझाने लगे—"क्यों तुम अपनी हत्या करते हो? "वह मरी नहीं है, तो अवश्य उसको प्राप्त करोगे, धैर्य धारण करो और उसको खोजो। इस संसार में धैर्यशाली उद्योगियों का अप्राप्य कुछ भी नहीं है"। इस प्रकार समझाये जाने पर उस हरिस्वामी ने कुछ दिनों के पश्चात् बड़ी कठिनाई से धैर्य धारण किया, और सोचा कि—"ब्राह्मणों को सर्वस्व देकर तीर्थों में भ्रमण करूँ, पाप समूहों को नष्ट करूँ। पापों का विनाश हो जाने पर घूमते हुए कदाचित् उस प्रियतमा को प्राप्त कर सकूँगा"। यह सोच कर उसने उठ कर स्नान आदि किया।

दूसरे दिन उसने सदाव्रत करके उसमें अनेक प्रकार के अन्न और पानक बनवा कर अवारितद्वार होकर ब्राह्मणों को भोजन कराया और उन लोगों को सम्पूर्ण धन दे दिया। ब्राह्मणों में साधुभाव मात्र धन लेकर अपने देश से निकल कर प्रियतमा को प्राप्त करने के लिये तीर्थों में भ्रमण करने के लिये चला गया। उसके घूमते रहने पर प्रचण्ड सूर्य रूपी मुख वाला, उसकी प्रदीप्त किरणरूपी केशर वाला भयङ्कर ग्रीष्म ऋतु रूपी सिंह आ-

एवं तस्या वचः श्रुत्वा स राजा तां प्रत्युवाच,—"सुन्दरि ! अहमङ्गराजः यशःकेतुर्नाम, आप्ताज्जनादिहाम्बुधौ दृश्यां त्वामश्रौषं, ततस्त्वदर्थम् इमं वेशं कृत्वा राज्यं विमुच्य आगत्य च अनुमार्गेण इह प्रविष्टोऽस्मि, तन्मे काऽसि त्वं कथय"। इति तेनोक्ता सा सलज्जा सानुरागा च तमभ्यधात्,—"महाभाग ! मृगाङ्कसेन इति श्रीमानस्ति विद्याधराधिपः, मां मृगाङ्कवतीं नाम तस्याऽऽत्मजां विद्धि। स पिता मामस्मिन् नगरे एकाकिनीं विमुच्य केन हेतुना सपौरजनः क्वापि गतः इत्यहं न जाने; तेनाहं शून्यवसतेरस्मात् वारिधौ उन्मज्जय कल्पद्रुमाऽऽरूढा भवितव्यतां गायामि"। एवमुक्तवती सा तस्य मुनेर्वचस्सरता तेन राज्ञा पेशलैः सुवचोभिः तथा अरज्यत, यथा अनुरागविवशा तत्क्षणं तस्य वीरस्य भार्य्यात्वम् अङ्गीकृत्य समयमेकमभ्यधात्,—"आर्य्यपुत्र ! प्रतिमासं शुक्लकृष्णचतुर्दश्याम् अष्टम्याञ्च अनायत्ता चतुरो दिवसान् यत्र क्वापि गच्छन्ती अहं त्वया न निवार्य्या, नापि द्रष्टव्या; अत्र हि कारणं विद्यते" इति। ततः "तथा"

---

इस प्रकार उसका वचन सुनकर उस राजा ने उसको जवाब दिया—"हे सुन्दरी ! मैं अङ्गदेश का राजा यशःकेतु नामवाला हूँ, विश्वासी व्यक्ति के मुख से दर्शन करने योग्य तुमको मैंने सुना, तब तुम्हारे लिये यह वेश बनाकर राज्य त्याग करके आकर अनुसरण करते हुए यहाँ तक पहुँचा हूँ। अतः तुम कहो कि—कौन हो तुम ?"। यह उसके द्वारा कही हुई उसने लज्जित तथा अनुरक्त होकर उसको कहा—"महानुभाव ! सभी सम्पत्ति से युक्त विद्याधरों के राजा मृगाङ्कसेन नामके हैं, मुझ मृगाङ्कवती को उसीकी पुत्री समझिये। वह पिता मुझे इस नगरी में अकेली छोड़कर किस कारण से पुरवासियों के साथ कहीं चले गये, यह तो मैं नहीं जानती हूँ। इसी से मैं इस शून्य नगर से समुद्र में बाहर निकल कर कल्पवृक्ष पर आरूढ़ होकर भवितव्यता का गान करती हूँ"। ऐसा कहने वाली वह उस मुनि का वचन स्मरण करने वाले उस राजा के द्वारा मनोहर वचनों से उस प्रकार अनुरक्त हुई कि अनुराग से विवश होकर उसी समय उस वीर की पत्नी होना स्वीकार करके एक नियम करने के लिए कहा—"हे पतिदेव ! प्रति मास के शुक्ल पक्ष तथा कृष्ण पक्ष की चतुर्दशी तथा अष्टमी तिथि में चार दिन अस्वाधीन होकर जहाँ कहीं जाती हुई मैं तुम्हारे द्वारा रोकी न जाऊँ, न देखी जाऊँ; इसमें कुछ कारण है"। तब "वैसा ही करूँगा" इस प्रकार स्वीकार करके

गाम। समीरणाश्च प्रियाविरहसन्तप्तानां पान्थानां निःश्वासमारुतैः न्यस्तोष्मा इव अत्युष्णो वहति स्म। जलाशयाश्च शुष्यद्विपाण्डुपङ्काः घर्मलुप्ताम्बुसम्पदः स्फुटितहृदया इव दृश्यन्ते स्म। पादपाश्च पक्षिणां चीत्कारमुखरास्तापम्लानदलाधराः मधुश्रीविरहिण इव समदृश्यन्त।

तस्मिंश्च काले अर्कतापेन कान्तावियोगेन क्षुधया तृषया अध्वश्रमेण चातीव क्लान्तो हरिस्वामी भोजनार्थी भ्रमन् कञ्चित् ग्राममाससाद। तत्र च पद्मनाभनाम्नः विप्रस्य गृहे बहून् विप्रान् भुञ्जानान् दृष्ट्वा द्वारशाखां समालम्ब्य निःशब्दनिश्चलस्तस्थौ। तथा स्थितं तमालोक्य तस्य याज्ञिकस्य विप्रस्य गृहिणी साध्वी सञ्जातदया व्यचिन्तयत्,—"अहो! क्षुत् नाम गुर्वी कस्य लाघवं न कुर्य्यात्? यदेष कोऽपि अन्नार्थी द्वारि अधोमुखस्तिष्ठति; दृश्यते चासौ दूरादभ्यागत इव स्नातः क्षीणेन्द्रियः; तदेषः अन्नदानपात्रम्" इत्यवधार्य्य सा साध्वी परमान्नभृतं सघृतशर्करं पात्रमुत्क्षिप्य पाणिभ्यामानीय प्रश्रयवती तस्मै ददौ, जगाद च एनं,—"भुङ्क्ष्व इह क्वचित् वापीतटे

---

गया। पवन भी प्रियतमा के विरह से सन्तप्त पथिकों के निःश्वास वायु से गर्मी पहुँचाये हुए के समान अत्यन्त गर्म होकर बहने लगा। सरोवर सूखी हुई अतएव सफेद कीचड़ वाले, धूप से विनष्ट की हुई जलसम्पत्ति वाले, हृदय फटे हुए के सदृश दिखाई देने लगे। पक्षियों के चीत्कारों से शब्दायमान वृक्ष भी सन्ताप से मलिन नव किसलय रूपी अधर वाले वसन्तश्री के विरही के सदृश दिखाई देने लगे।

उस समय में सूर्य के सन्ताप से, प्रियतमा के वियोग से, भूख से, प्यास से और मार्ग के परिश्रम से अत्यन्त थका हुआ हरिस्वामी भोजन के लिये घूमता हुआ किसी गाँव में पहुँचा। वहाँ पद्मनाभ नामक ब्राह्मण के घर में बहुतों ब्राह्मणों को भोजन करते हुए देख कर निःशब्द तथा निश्चल होकर दरवाजे का चौकट पकड़ कर खड़ा हो गया। उस प्रकार खड़े हुए उसको देखकर उस याज्ञिक ब्राह्मण की पतिव्रता पत्नी ने दयालु होकर सोचा—"अरे! भूख बहुत बड़ी वस्तु है, यह किसकी लघुता नहीं पैदा कर देती है? जिससे यह कोई अन्न चाहने वाला द्वार पर अधोमुख होकर खड़ा है। मालूम होता है कि यह दूर से आया हुआ है, स्नान किया है, दुर्बल है; तो यह अन्नदान का पात्र है" यह निश्चय करके उस पतिव्रता ने घी और चीनी से युक्त पायस से भरा हुआ पात्र उठा कर दोनों हाथों से लाकर आदर के साथ उसको दे दिया, और इसको कहा—"यहीं कहीं तालाब के किनारे

इति प्रतिपद्य स राजा गान्धर्वेण विधिना तां परिणीय तत्र तया सह दिव्यं भोगसुखं बुभुजे।

एकदा सा मृगाङ्कवती दिव्यसम्भोगसुखावस्थितं तं भूपं प्राह स्म,—"नाथ! त्वमिहैव प्रतीक्षस्व, कार्य्यार्थं क्वापि अहं यामि, अद्य सा कृष्णचतुर्दशी मम सम्प्राप्ता। आर्य्यपुत्र! इहस्थश्च असुं (न) स्फाटिकं गृहं मास्म गमः, मा अत्र वाप्यां निपतितो भव, भूलोकं त्वं तत्क्षणं गमिष्यसि" इत्युक्त्वा तमामन्त्रय तस्मात् पुरात् सा बहिरगात्। राजाऽपि गृहीतखड्गस्तां (प) जिज्ञासुरन्वगमत्, अद्राक्षीच्च तमःश्याम०व्यात्तवक्त्रबिलं साकारमिव पातालमागच्छन्तं कमपि राक्षसम्। स च राक्षसः निपत्यैव घोरं रवं कुर्वन् तां मृगाङ्कवतीं वक्त्रे निक्षिप्य निगीर्णवान्। तदवलोक्यैव स राजा अतिकोपेन सहसा ज्वलन् निर्मोकमुक्तभुजगश्यामलेन महाऽसिना क्रोधाऽऽकृष्टेन धावित्वा रक्षसस्तस्य सन्दष्टोष्ठपुटं शिरश्चिच्छेद।

ततो मोहनिशाऽन्धे विनष्टगतिके कान्तावियोगार्त्ते नृपे अक-

---

वह राजा गान्धर्व विधान से उससे विवाह करके वहाँ उसके साथ दिव्य भोग का सुख भोगने लगा।

एक दिन उस मृगाङ्कवती ने दिव्यसम्भोग सुख में लगे हुए उस राजा को कहा—"नाथ! तुम यहीं प्रतीक्षा करो, किसी कार्य के लिये मैं कहीं जाऊँगी, आज मेरी वह कृष्ण पक्ष की चतुर्दशी तिथि आ गयी है। हे पतिदेव! यहाँ रहकर तुम इस स्फटिक के घर में मत जाना तथा इस तालाब में मत प्रवेश करना, यदि प्रवेश करोगे तो उसी समय तुम भूलोक में चले जाओगे"। यह कहकर और उसको पूछकर वह उस नगर से बाहर चली गयी। राजा ने भी जानने का इच्छुक होकर तलवार लेकर अनुसरण किया और देखा अन्धकार से काले फैलाये हुए मुखरूपी गह्वरवाले, शरीरधारी पातालभुवनके समान आते हुए किसी राक्षस को। और उस राक्षस ने आते ही भयंकर शब्द करते हुए उस मृगाङ्कवती को मुह में डालकर निगल गया। वह देखते ही उस राजा ने सहसा अत्यन्त क्रोध से प्रज्वलित होकर केंचुली से मुक्त सर्प के सदृश काली क्रोध से खींची हुई बड़ी तलवार से दौड़कर उस राक्षस का दाँतों से ओठ दबाता हुआ शिर काट डाला।

तब राजा के मोहरूपी रात से अन्धे, गतिहीन तथा पत्नी के वियोगव्यथा

गत्वा"। सोऽपि "तथा" इति तदन्नपात्रं गृहीत्वा नातिदूरतो गत्वा क्वापि वापीतटे वटतरोरधः स्थापितवान्।

ततः स तत्र वाप्यां पाणिपादं प्रक्षाल्य आचम्य च यावत् भक्षयितुं सहर्षः परमान्नमुपैति, तावत् कश्चित् श्येनः कुतश्चित् चञ्च्वा पादद्वयेन च एकं कृष्णसर्पं गृहीत्वा तस्मिन् तरावुपाविशत्। तेन पक्षिणा आक्रम्य उह्यमानस्य उत्क्रान्तजीवितस्य सर्पस्य आस्यात् विषलाला विनिर्ययौ; सा अधःस्थिते तस्मिन्नन्नपात्रे तदाऽपतत्। हरिस्वामी तु तददृष्ट्वा क्षुधार्त्तः आगत्यैव तत् सर्वं भुक्तवान्। अथ तस्य भुक्तवत एव तीव्रा विषज्वाला प्रादुरभवत्। "अहो! विधौ विपर्य्यस्ते किमिव न विपर्य्येति? तत् सक्षीरघृतशर्करम् अन्नं मे विषीभूतम्" इति जल्पन् हरिस्वामी परिस्खलन् तां सत्रिणस्तस्य विप्रस्य गेहिनीं गत्वा प्राब्रवीत्,—"ब्राह्मणि! त्वद्दत्तात् अन्नात् मे विषं जातं, तत् क्षिप्रं कञ्चित् विषमन्त्रिणम् आनय, नो चेत् तव ब्रह्महत्या भविता"। इत्याकर्ण्य सा साध्वी "किमेतत्" इति विह्वला यावत् विषमन्त्रिण-

---

जाकर खाओ"। उसने भी "वैसा ही" यह स्वीकार करके उस अन्नपात्र को लेकर थोड़ी ही दूर जाकर कहीं सरोवर के किनारे बरगद के पेड़ के नीचे उसे रख दिया।

तब वह उस तालाब में हाथ-पैर धोकर कुल्ला करके जब तक भोजन करने के लिये प्रसन्न होकर पायस के पास आता है तब तक कोई बाज कहीं से चोंच और दोनों पैरों से एक काले सांप को पकड़ कर उसी पेड़ पर बैठ गया। उस पक्षी के द्वारा दबा कर उठाये हुए अतएव मरे हुए उस साँप के मुख से विष की लार निकली और वह उस समय नीचे स्थित उस अन्नपात्र में गिर गयी। हरिस्वामी तो उसको बिना देखे ही भूखपीड़ित होकर आते ही वह सम्पूर्ण अन्न खा गया। इसके बाद उसके खाते ही शरीर में विष की तीव्र जलन उत्पन्न हो गयी। "अरे! विधाता के प्रतिकूल होने से क्या नहीं प्रतिकूल होता है? वह दूध, घी, चीनी से युक्त अन्न मेरे लिए विष हो गया"। यह कहते हुए लड़खड़ाता हुआ हरिस्वामी ने यज्ञ करने वाले उस ब्राह्मण की उस पत्नी के पास जाकर कहा—"हे ब्राह्मणी! तुम्हारे दिये हुए अन्न से मेरे लिये विष उत्पन्न हो गया है, तो जल्दी से किसी विष के मन्त्र जानने वाले को बुलाओ, नहीं तो तुम्हें ब्रह्महत्या लगेगी"। यह सुनकर उस पतिव्रता ने "यह क्या हुआ?" यह सोचकर व्याकुल होकर जब तक विष-

स्मात् मेघमलिनस्य तस्य रक्षसः अङ्गं भित्त्वा उद्योतितदिक्चक्रा विमला चन्द्रमूर्त्तिरिव सा मृगाङ्कवती जीवन्ती अक्षताङ्गी विनिर्ययौ। तां तथा सङ्कटोत्तीर्णां कान्तां दृष्ट्वा राजा,—"एहि एहि" इति वदन् प्रधाव्यैव आलिलिङ्ग। "प्रिये! किमेतत्? स्वप्नोऽयमुत माया?"। इति तेन पृष्टा सा संस्मृत्य विद्याधरी प्रत्यभाषत,—"आर्य्यपुत्र! शृणु,—

नायं स्वप्नः, नापि माया; अयं हि विद्याधरेन्द्रात् स्वपितुर्मम शापोऽभूत्। स मे पिता बहुपुत्रोऽपि इह वसन् वात्सल्यात् मया विना आहारं नाकरोत्। अहञ्च सर्वदा इह निर्जने शर्वपूजाऽऽसक्ता चतुर्दश्याञ्च द्वयोरेव पक्षयोरागच्छम्। एकदा चतुर्दश्यामिहाऽऽगत्य चिरं गौरीं समर्चयन्त्या मे दैवात् समस्तं दिनमवसितम्। तस्मिन् दिने स मम पिता मत्प्रतीक्षः क्षुधितोऽपि मां प्रति कुपितः किञ्चिदपि नाभुङ्क्त, नापि अपिबत्। ततो रात्र्याम् उपेतायां सापराधां मामधोमुखीं भवितव्यताबलात् अस्नेहः शपति स्म,—"यथा त्वं मामवज्ञाय क्षुधार्त्तं सर्वं दिनं विस्मृतवत्यसि, तस्मात् मासि मासि अष्टम्योश्चतुर्दश्योश्च

---

से पीड़ित हो जाने पर एकाएक मेघ के समान मलिन उस राक्षस का शरीर फाड़ कर दिशाओं को प्रकाशित करती हुई स्वच्छ चन्द्रमा की मूर्ति के समान अक्षतअङ्ग वाली जीवित होकर वह मृगांकवती निकल पड़ी। उस प्रकार के संकट से उत्तीर्ण हुई उस प्रियतमा को देखकर राजा ने "आओ आओ" यह कहकर दौड़कर आलिङ्गन किया। "प्रिये! यह क्या था? स्वप्न था या माया?" यह उसके द्वारा पूछी हुई उस विद्याधारी ने स्मरण करके उत्तर दिया—"पतिदेव! सुनो, न तो यह स्वप्न था और न माया थी; यह तो विद्याधरों के राजा मेरे पिता से मुझे शाप मिला था। यहाँ रहते हुए वह मेरे पिता बहुत पुत्र रहने पर भी स्नेह के कारण मेरे बिना भोजन नहीं करते थे और मैं सदा शंकर जी की पूजा में आसक्त होकर दोनों पक्षों की चतुर्दशी तिथि को इस निर्जन स्थान में आती थी। एक बार चतुर्दशी तिथि में यहाँ आकर बहुत देर तक गौरी की पूजा करते रहने पर दैवयोग से मेरा सम्पूर्ण दिन बीत गया। उस दिन वह मेरे पिता मेरी प्रतीक्षा करते हुए भूखे रहने पर भी मेरे ऊपर क्रोधित होकर कुछ भी नहीं खाये न पिये। तब रात होने पर शिर झुकाये हुए मुझ अपराधिनी को भवितव्यता के कारण निःस्नेह होकर उन्होंने शाप दे दिया कि—"तुम अनादर करके मुझ भूखे को पूरे दिन भर भूल गयी हो, इसलिए प्रतिमास दोनों अष्टमी तथा दोनों चतु-

मानाययितुं चेष्टते स्म, तावत् स हरिस्वामी परावृत्तनेत्रः प्राणौर्व्य-युज्यत। ततः सा निर्दोषाऽपि आतिथेयी अपि सत्त्रिणा तेन विप्रेण मिथ्याऽतिथिवधजनितकोपेन भार्या निष्कासिता, शुभादपि कर्मणः समुत्पन्नमृषापवादा जातावमाना च तपसे तीर्थमशिश्रियत्"।

इति कथामाख्याय वेतालः पृच्छति स्म,—"राजन्! एषां सर्प-श्येनान्नदातॄणां मध्ये कस्य विप्रवधोऽभूत्? अस्य वादो धर्मराजस-काशे अपि अभवत्, परं न कोऽपि निर्णयः समजनि; तत् राजेन्द्र! त्वमेव ब्रूहि, कस्य ब्रह्महत्या जाता? मिथ्या ब्रुवतो जानतस्ते स एव शापः स्मर्त्तव्यः" इति। तदाकर्ण्य राजा समुज्झितमौनस्तं वेतालम-ब्रवीत्,—"कस्य तत् पातकम्? सर्पस्य तावदवशस्य शत्रुणा भक्ष्य-माणस्य कोऽत्रापराधः? श्येनेनापि क्षुधितात्मना न किमपि दृष्टं, तस्या-स्यापि नात्रापराधः। अकस्मात् प्राप्तमतिथिं भक्ष्येण भोजयतोर्दम्पत्यो-रपि द्वयोर्वाऽन्यतरस्य वा कथं दोषः? यतस्तौ धर्मैकप्रवृत्तौ नेमम-पराधमर्हतः। अहं तावत् तस्यैवैषा ब्रह्महत्या इति मन्ये, योऽविचार्यैव

---

मन्त्र वाले को बुलाने का प्रयत्न किया, तब तक वह हरिस्वामी आँख उलटा कर मर गया। तब उस याज्ञिक ब्राह्मण के द्वारा मिथ्या अतिथि-वध से उत्पन्न क्रोध से निर्दोष रहने पर भी अतिथि-सेवापरायण रहने पर भी वह पत्नी घर से निकाल दी गयी। अच्छे कार्य से भी उत्पन्न झूठ अपवाद वाली अपमानित हुई उसने तपस्या करने के लिये तीर्थ का आश्रय ले लिया"।

यह कथा कह कर वेताल ने पूछा—"महाराज! इन सर्प, बाज तथा अन्न देने वाली किसको ब्रह्महत्या लगी? इसका विवाद धर्मराज के पास भी हुआ था, लेकिन कोई निर्णय नहीं हो सका। तो राजेन्द्र! तूँ ही कहो कि किसको ब्रह्महत्या लगी? जानते हुए भी झूठ कहने पर तुम्हारा वही शाप है, याद रखना"। यह सुनकर मौन त्याग कर राजा ने उस वेताल को कहा—"किसको वह पाप लगेगा? साँप तो पराधीन था शत्रु से खाया जा रहा था तो इसमें उसका कौन अपराध है? भूख से व्याकुल बाज ने भी कुछ देखा नहीं, इसलिये उसका भी इसमें अपराध है। एकाएक पहुँचे हुए अतिथि को अन्न से भोजन कराने वाले दोनों दम्पतियों का अथवा दोनों में से एक का कैसे दोष हो सकता है? क्योंकि वे दोनों केवल धर्म करने में लगे हुए थे, अतः अपराध के योग्य नहीं हैं। मैं तो सोचता हूँ कि उसको यह ब्रह्महत्या लगेगी जो विना विचारे हुए इन तीनों में से किसी एक को

हराच्चर्चनरसात् पुरात् बहिर्यान्तीं त्वां कृतान्तसन्त्रासो नाम राक्षसो निगरिष्यति, ततश्चास्य हृदयं भित्त्वा भित्त्वा निरेष्यसि, शापं ताञ्च निगरणव्यथां न स्मरिष्यसि, एकाकिनी च अत्र स्थास्यसि" इति शापं ददत् स मयाऽनुनीतः ध्यात्वा शापान्तमकरोत्,—"यदाऽङ्गपतिः यशःकेतुस्तव भर्त्ता भूत्वा राक्षसेन निगीर्णां त्वां दृष्ट्वा तं राक्षसं निहनिष्यति, तदा त्वं तस्य हृदयान्निर्गता शापात् मोक्ष्यसे, संस्मरिष्यसि च शापादिसर्वा निजा विद्याः"। इति शापान्तमुक्त्वा इह मामेकाकिनीं मुक्त्वा सपरिच्छदो निषधाद्रिं गतः; अहं तदादेशेन शापमोहादिहावसम्। स शापश्चास्य मे क्षीणः, जाता च सर्वत्र स्मृतिः; तदद्य तातपार्श्वगमनाय निषधाद्रिं व्रजामि, शापान्ते स्वगतिं प्राप्स्यामि इत्येष मे नियमः। त्वमिह आस्स्व, व्रज वा स्वराष्ट्रम्, अत्र ते स्वातन्त्र्यम्"।

एवं तयोक्तो नृपतिर्दुःखितस्ताम् अभ्यर्थयामास,—"सुन्दरि! सप्ताहानि त्वया न गन्तव्यं, सुमुखि! प्रसीद, इह उद्याने त्वया सह

---

दशी तिथियों में शिव की पूजा के अनुराग से नगर से बाहर जाती हुई कृतान्तसन्त्रास नाम का राक्षस निगल जायगा; तब उसका हृदय फाड़-फाड़ कर निकलोगी। यह शाप तथा निगलने की व्यथा भूल जाओगी और अकेली यहाँ रहोगी" यह शाप देते हुए वह मेरे द्वारा अनुनय-विनय किये गये। तब कुछ सोचकर उन्होंने शाप का अन्त बताया कि—"जब अङ्ग देश का राजा यशःकेतु तुम्हारा पति होकर राक्षस के द्वारा निगले हुए तुम्हें देखकर उस राक्षस को मार डालेगा तब तुम उसके हृदय से निकल कर शाप से मुक्त हो जाओगी और शाप से लेकर अपनी सभी विद्या तक सभी बातें स्मरण हो जायँगी"। यह शाप का अन्त कहकर यहाँ मुझे अकेली छोड़कर निषध नामक पर्वत पर चले गये। मैं उनके आदेश से शाप के मोह में पड़ी हुई यहाँ निवास कर रही हूँ। मेरे विषय में उनका वह शाप समाप्त हो गया और सभी विषय स्मरण हो गये हैं। तो आज पिता के पास जाने के लिए निषध पर्वत पर जाऊँगी। शाप का अन्त होने पर मैं अपनी परिस्थिति को प्राप्त करूँगी, यही मेरे लिए नियम था। तुम यहाँ रहो अथवा अपने देश को चले जाओ, इस विषय में तुम्हारी स्वतन्त्रता है"।

उसके द्वारा इस प्रकार कहे हुए उस राजा ने दुःखी होकर उससे प्रार्थना की कि—"हे सुन्दरी! सात दिनों तक तुम मत जाओ, हे सुमुखी! कृपा

एषामन्यतरस्य तां ब्रूयात्" इति। इतिवादिनो नृपस्य स्कन्धात् स वेतालस्तत्क्षणादलक्षितः तमेव शिंशपातरुमवललम्ब। राजाऽपि तमानेतुं समुद्योगी तथैव अन्वधावत्।

---

ब्रह्म हत्या लगने की बात कहेगा"। यह कहनेवाले उस राजा के कन्धे पर से वह वेताल उसी समय अलक्षित होकर उसी शीशम के पेड़ के आश्रय में चला गया। राजा ने भी उसको लाने के लिये उद्योग करते हुए उसी प्रकार अनुगमन किया।



क्रीडन् औत्सुक्यं विनोदयामि। ततस्त्वं पितुः स्थानं गमिष्यसि, अहञ्च स्वस्थानं यास्यामि"।

ततः सः "तथा" इति प्रतिपन्नया तया कान्तया तस्मिन्नुद्याने सजलोत्पलनेत्रासु "मा स्म याहि अस्मान् विहाय" इति हंससारसनिचयैः रुवन्तीष्विव उत्क्षिप्तवीचिहस्तासु वापीषु षडहं रेमे। ततः सप्तमेऽहनि स राजा युक्त्या यत्र भूलोकप्रापिणी द्वारवापिकाऽस्ति, तत्र गृहे तां कान्तामनयत्; तत्र चाऽऽगत्य तां कण्ठे गृहीत्वा तस्यां वाप्यां निपत्य सहसा तया सह स्वपुरोद्याने वापीमध्यादुत्तस्थौ।

तत्र कान्तासमेतं प्राप्तं तं भूपं दृष्ट्वा उद्यानपालकाः प्रहृष्टा गत्वा मन्त्रिणं दीर्घदर्शिनं जगदुः। सोऽपि आगत्य पादयोः पतित्वा तम् आनीतेप्सिताङ्गनं सपौरोऽभ्यन्तरं प्रावेशयत्। "अहो! कथं सैषा दिव्याङ्गना अनेन राज्ञा प्राप्ता? या व्योम्नि विद्युदिव क्षणदृश्या मया दृष्टा; धात्रा ललाटाक्षरपङ्क्तिषु यस्य यल्लिखितं, तत्तस्य असम्भाव्यमपि अवश्यम् उपतिष्ठते"। इति तस्मिन् मन्त्रिमुख्ये अन्यस्मिंश्च जने

---

करो, इस वाटिका में तुम्हारे साथ रमण करते हुए उत्कण्ठा का बहलाव करूँगा। इदके बाद तुम पिता के स्थान में चली जाओगी और मैं अपने स्थान पर चला जाऊँगा"। तब उसने "वैसा ही करूँगी" इस प्रकार स्वीकार करने वाली उस प्रियतमा के साथ इस उद्यान में सजलकमल नयन वाले "हम लोगों को छोड़कर मत जाओ" इस रूप में हंस-सारस समूहों के द्वारा रोते हुए के समान अपनी लहरों के हाथ उठाये हुए के समान तालावों में ६ दिनों तक रमण किया। तब सातवें दिन वह राजा जहाँ पर भूलोक पहुँचाने का रास्ता वाला तालाब था वहाँ के घर में युक्ति से उस प्रियतमा को ले गया और वहाँ आकर उसको गले में लगाकर पकड़ कर एकाएक उस तालाब में गिर गया और उसके साथ ही अपने नगर के उद्यान के तालाब के मध्य से बाहर निकला।

वहाँ प्रियतमा सहित पहुंचे हुए उस राजा को देखकर प्रसन्न हुए उद्यानपालकों ने जाकर उस दीर्घदर्शी मन्त्री को कहा। उसने भी पुरजनों के साथ आकर उसके पैरों पर गिरकर लाये हुए अभीष्ट प्रियतमा वाले उस राजा को महल के अन्दर प्रवेश कराया। "अरे! कैसे वहाँ यह दिव्य सुन्दरी इस राजा को प्राप्त हुई? जो आकाश में बिजली की तरह एक क्षण के लिए दृश्य होकर मेरे द्वारा देखी गयी थी। विधाता ने ललाट की अक्षरपंक्तियों में जिसका जो लिखा है वह असम्भव होने पर भी उसको अवश्य मिलता है"। यह उस प्रधान मन्त्री के तथा अन्य लोगों के सोचते रहने पर उस

# अथ चतुर्दशकथा।

ततो नृपः पुनः शिंशपामूलं, गत्वा तं वेतालं प्राग्वत् स्कन्धमारोप्य गन्तुमारेभे। वेतालोऽपि यान्तं तं नृपमकथयत्—महाराज, श्रमम-पनेतुमहं ते एकां कथां कथयामि, शृणु—

अस्ति अयोध्या नाम नगरी, या रक्षःकुलकृतान्तस्य रामस्य राज-धानी आसीत्। तस्यां वीरकेतुर्नाम राजा महाबाहुः वसन् प्राकारो नगरीमिव इमां क्षोणिं ररक्ष। तस्मिन् महीपतौ शासति महीम् अस्यां पुर्य्यां रत्नदत्तो नाम कश्चित् महावणिक् प्रतिवसति स्म। तस्य नन्द-यन्तीति समाख्यायां पत्न्यां रत्नवती नाम देवाराधनलब्धा सुता समजायत। सा पितृवेश्मनि रूपलावण्यविनयैः सहजैः गुणैः सह दिने दिने वृद्धिमवाप। ताञ्च यौवनशालिनीं वीक्ष्य केवलं महान्तो वणिजो न, राजानोऽपि तत्पितरं ययाचिरे। सा तु मनस्विनी पुरुषद्वेषिणी वासवमपि भर्त्तारं न कामयते स्म, विवाहकथामपि श्रुत्वा प्राणान्

---

## चौदहवीं कथा

इसके बाद उस राजा ने फिर शीशम की जड़ में जाकर उस वेताल को पूर्ववत् कन्धे पर उठा कर चलना प्रारम्भ किया। और वेताल ने भी जाते हुये उस राजा से कहने लगा—"महाराज! थकावट दूर करने के लिये फिर मैं एक कहानी कहता हूँ, सुनो—

अयोध्या नाम की नगरी है। जो राक्षसों के कुल के लिये यमराज भग-वान् राम की राजधानी थी। महाबलवान् वीरकेतु नाम का राजा उसमें निवास करता हुआ जैसे प्राकार नगरी की रक्षा करता है, उसी प्रकार इस सम्पूर्ण पृथ्वी की रक्षा करता था। उस राजा के पृथ्वी का शासन करते रहने पर उसी नगरी में रत्नदत्त नाम का कोई बहुत बड़ा सेठ निवास करता था। उसकी नन्दयन्ती नाम की पत्नी में देवता की आराधना से प्राप्त हुई रत्नवती नाम की कन्या उत्पन्न हुई। वह रूपलावण्य, विनय आदि स्वाभा-विक गुणों के साथ पिता के घर में बढ़ने लगी। युवती हुई उसको देख कर केवल बड़े बड़े सेठ ही नहीं, बल्कि राजा लोग भी उसके पिता से याचना करना प्रारम्भ कर दिये। वह बुद्धिमती तो पुरुष से द्वेष रखती थी। अतः इन्द्र को भी पति बनाना नहीं चाहती थी। विवाह की बात भी सुन कर प्राण-

ध्यायति, सा मृगाङ्कवती तं भूपतिं स्वदेशाऽऽगतं दृष्ट्वा पूर्णसप्ताहा वैद्याधरीं गतिं गन्तुमियेष, परं तदा उत्पतनी विद्या स्मृतौ नाविरासीत्। ततः सा मुषितेव परं विषादमगमत्।

"कथमेवं विषण्णाऽसि ? प्रिये! वद" इति राज्ञाऽभिहिता सा विद्याधरी तमब्रवीत्,—"अहं शापमुक्तापि यत् इयच्चिरं त्वत्स्नेहपाशसंयमिता स्थिता, तेन मम विद्या दिव्या गतिश्च नष्टा"। तदाकर्ण्य राजा,—"ममेयं विद्याधरी सिद्धा" इति प्रहृष्टः महान्तमुत्सवं चकार। तदवलोक्य स दीर्घदर्शी मन्त्री निशि गृहं गत्वा शयनीयं प्राप्य च सहसा हृत्स्फोटेन व्यपद्यत। ततो राजा स्वयं धृतराज्यभारः तया मृगाङ्कवत्या सह चिरं स्वर्गसुखमनुभवन् तस्थौ"।

इति कथामाख्याय स वेतालः पर्य्यपृच्छत्,—"राजन्! स्वामिनस्तथा अभ्युदये सम्पन्ने तस्य महामन्त्रिणः हृदयं यत् स्फुटितं, तस्य को हेतुः ? किं दिव्याङ्गना मया नाऽऽप्ता इति शुचा ? वा राज्यार्थिनः पुनः राजाऽऽगमनजेन दुःखेन ? यदि जानन्नपि एतत् मह्यं न वक्ष्यसि,

---

मृगाङ्कवती ने उस राजा को अपने देश आये हुए देखकर सप्ताह पूरा होने से अपनी विद्याधर जाति की परिस्थिति प्राप्त करने की इच्छा की, किन्तु उस समय ऊपर उड़ने की विद्या स्मरण में उपस्थित नहीं हुई। तब उस ने कुछ चुरायी गयी के समान अत्यन्त विषाद को प्राप्त किया।

"इस प्रकार क्यों उदास हो गयी हो ? प्रिये! कहो" यह राजा के द्वारा कही हुई उस विद्याधरी ने कहा कि—"मैं शाप से मुक्त होने पर भी जो कि इतने दिनों तक तुम्हारे स्नेहपाश से बान्धी हुई रह गयी, इसीसे मेरी विद्या और उड़ने की शक्ति नष्ट हो गयी"। यह सुनकर उस राजा ने—"मेरी यह विद्याधरी सिद्ध हो गयी" यह सोचकर अत्यन्त प्रसन्न होकर बहुत बड़ा उत्सव किया। यह देखकर वह दीर्घदर्शी मन्त्री रात में घर जाकर बिस्तरे पर पहुँच कर एकाएक हृदय फट जाने से मर गया। तब उस राजा ने स्वयं राज्य का भार धारण करके उस मृगाङ्कवती के साथ स्वर्ग का सुख अनुभव करते हुए बहुत दिनों तक राज्य किया।

यह कथा कहकर उस वेताल ने पूछा—"महाराज! स्वामी के उस प्रकार अभ्युदय से संयुक्त होने पर उस महामन्त्री का जो हृदय फट गया, उसमें क्या कारण है ? क्या यह दिव्यसुन्दरी मुझे नहीं मिली, इस शोक से ? अथवा उसके राज्य के इच्छुक होने के कारण फिर राजा के आ जाने के दुःख से ? यदि जानते हुए भी यह मुझे नहीं कहोगे तो तुम्हारा धर्म नष्ट हो

त्यक्तुं यतते स्म। तेन तस्य पिता वात्सल्यदुःखितस्तूष्णीं तस्थौ। स च प्रवादस्तस्यामयोध्यायां सर्वत्र पप्रथे।

अत्रान्तरे चौरैर्मुष्यमाणाः समस्ताः पौराः सम्भूय तं नृपं वीरकेतुं व्यजिज्ञपन्,—"प्रभो! प्रतिरात्रं चौरैरिह वयं मुष्यामहे, ते तु नास्माभिर्लक्ष्यन्ते, तदिदानीं देवः प्रमाणम्"। इति पौरैर्विज्ञप्तो राजा तां पुरीमभितः तस्कराणामनुसन्धानाय छन्नान् रात्रिरक्षकान् आदिशत्। ते च यदा समन्विष्य न तान् चौरानवापुः तदा राजा स्वयं निशि एकाकी गृहीतशस्त्रो भ्रमन् एकतः एकं, प्राकारपृष्ठेन यान्तं, निःशब्दपदसञ्चारविचित्रगतिकौशलं, सशङ्कलोलनयनं, मुहुः पृष्ठतः पश्यन्तं, कमपि पुरुषमपश्यत्। "अयं स चौरो मे पुरीं मुष्णाति एकचरः" इति मत्वा स नृपस्तस्यान्तिकमुपययौ। ततः स चौरस्तं नृपं दृष्ट्वा,—"कोऽसि?" इति पप्रच्छ। राजाऽपि,—"चौरोऽहम्" इति तं चौरं प्रत्यवादीत्। तदाकर्ण्य स चौरः सानन्दं तम् अभ्यधात्,—"तर्हि दिष्ट्या त्वं मे सुहृत्, तत् एहि मम गृहं, मित्राऽऽचारं तावत्

---

त्याग करने को तैयार हो जाती थी। इसी से उसका पिता स्नेह से दुखी होकर चुप ही रहता था।

इसी बीच में चोरों से धन चुराये जाते हुए सभी पुरवासियों ने इकट्ठा होकर वीरकेतु राजा को निवेदन किया—"प्रभो! प्रति रात्रि यहाँ चोरों के द्वारा हम लोगों के धन चुराये जाते हैं। वे चोर हम लोगों के द्वारा देखे नहीं जाते हैं, तो इस समय आप ही इस का निर्णेता हैं"। इस प्रकार पुरवासियों के द्वारा निवेदन किये हुए उस राजा ने उस नगरी के चारों ओर चोरों का अनुसन्धान करने के लिये छिप कर खड़े रहने वाले रात्रिरक्षकों को आदेश दिया। उन लोगों ने अन्वेषण करके जब चोरों को नहीं प्राप्त किया तब राजा ने स्वयं रात में शस्त्र-धारण करके अकेले घूमते हुए एक स्थान में चहारदिवारी के ऊपर से जाते हुए निःशब्द चरण-सञ्चार से विचित्र गति तथा कौशल वाले, शङ्कित तथा चञ्चल नेत्र वाले, बार बार पीछे की ओर देखने वाले एक किसी पुरुष को देखा। "यह वही चोर है जो मेरी नगरी में अकेला ही चोरी करता है" यह समझ कर वह राजा उसके पास चला गया। तब उस चोर ने उस राजा को देखकर "तुम कौन हो" यह पूछा। राजा ने भी "मैं चोर हूँ" यह उस चोर को जवाब दिया। यह सुनकर उस चोर ने आनन्द के साथ उसको कहा—"तो भाग्य से तुम मेरे मित्र हो, इसलिये चलो मेरे घर कुछ मित्र का व्यवहार तो करूँ"। यह सुनकर राजा "ऐसा

तदा ते धर्मो विनंक्ष्यति, यास्यति च ते शिरः शतधा खण्डितम्"। इत्याकर्ण्य राजा तं वेतालम् अवादीत्,—"योगीश्वर! नैतत् द्वयमपि शुभचरिते मन्त्रितरे सम्भवति, किन्तु 'येन भूभुजा स्त्रीमात्रानुरागात् राज्यमुपेक्षितम्, अधुना तु दिव्यस्त्रीरक्तस्य तस्य अत्र का वार्त्ता? तन्मे कष्टे कृतेऽपि प्रत्युत दोष एव समधिको जातः' इति विभावयतस्तस्य मन्त्रिणो हृदयं स्फुटितमिति मन्ये"। इत्यभिहितो वेतालः स मायी तत्क्षणात् निजमेव निलयं जगाम। राजाऽपि तमवाप्तुं पुनरुद्यतः तमेव शिंशपातरुमाससाद।

---

जायगा और तुम्हारा सिर सैकड़ों टुकड़ों में फट जायगा"। यह सुनकर राजा ने उस वेताल को कहा—"हे योगीश्वर! अच्छे आचरण वाले श्रेष्ठ मन्त्री के विषय में इन दोनों में से एक का भी सम्भव नहीं है, किन्तु जिस राजा ने साधारण स्त्री के अनुराग से राज्य की उपेक्षा कर दी थी उस राजा के इस समय दिव्यसुन्दरी में अनुरक्त रहने पर इस विषय में बात ही कैसी? तो मेरे कष्ट सहने पर भी राज्यभार कम नहीं हुआ उलटे और अधिक दोष उत्पन्न हो गया" यह सोचते हुए उस मन्त्री का हृदय फट गया, ऐसा मैं सोचता हूँ"। ऐसा कहा हुआ वह मायावी वेताल उसी समय अपने ही स्थान पर चला गया। राजा भी उसे प्राप्त करने के लिए फिर उद्यत होकर उसी शीशम के पेड़ के पास पहुँचे।

करोमि" इति। तदाकर्ण्य स राजा,—"तथा" इत्युक्त्वा, तेनैव चौरेण सह वनान्तः प्राकारवेष्टितम् अशेषभोगशोभाऽऽढ्यं भास्वद्रत्नविराजितं नवीनं बलिराजानधिष्ठितं पातालमिव तद्गृहं ययौ। तत्र प्रविष्टे तस्मिन् कृतासनपरिग्रहे राजनि स तस्करः गृहाभ्यन्तरं प्रविवेश। क्षणे च तस्मिन् काऽपि दासी समेत्य तं नृपमवादीत्,—"महाभाग! कथं त्वमिह मृत्युमुखे प्रविष्टः? एकचौरोऽसौ निर्गत्य त्वयि पापमाचरिष्यति, ध्रुवमयं विश्वासघाती, तदितस्त्वरितं व्रज"।

इत्युक्तस्तया स राजा द्रुतं निर्गत्य राजधानीञ्च गत्वा निशि सैन्यानि असज्जयत्; ससैन्यश्चागत्य तस्य दस्योः तत् भूगृहं तैर्बलैररुणत्। अथ गृहं रुद्धं दृष्ट्वा स चौरः वृत्तं प्रति भेदमवगत्य, मरणे निश्चितमतिः शूरो युद्धाय निर्ययौ; निर्गतश्च रणे अमानुषं विक्रमं कुर्वन् करिणां करान्, वाजिनां जङ्घान्, भटानाञ्च शिरांसि एक एव खड्गचर्मभृत् चिच्छेद। ततः तं क्षपितानीकं नृपः स्वयमभ्यधावत्।

---

ही करूँगा" यह कहकर उसी चोर के साथ वन के अन्दर चहारदिवारी से घिरे हुए, सभी भोग तथा शोभा से भरे हुए, चमकीले रत्नों से सुशोभित, बलिराजा से अनधिकृत नवीन पाताल लोक के समान उसके घर गया। वहाँ प्रवेश करके आसन पर उस राजा के बैठ जाने पर उस चोर ने घर के अन्दर प्रवेश किया। उसी समय किसी दासी ने आकर उस राजा को कहा—"महाशय! क्यों तुम यहाँ मृत्यु के मुख में प्रवेश किये हो? यहाँ यह अकेला चोर है यह घर से निकल कर तुम्हारे ऊपर पाप का आचरण करेगा (तुम्हारी हत्या करेगा), निश्चित यह विश्वासघाती है, इसलिए यहाँ से शीघ्र चले जाओ"।

उसके द्वारा यह कहे जाने पर उस राजा ने शीघ्रता से निकल कर और राजधानी पहुँच कर रात ही में सैन्यों को सुसज्जित किया और सेना सहित आकर उस चोर का वह सुरङ्गगृह उन सैनिकों के द्वारा घेर लिया। तब अपना घर घिरा हुआ देखकर बीती हुई घटना से भेद खुला हुआ जानकर मरने का निश्चय विचार करके वह वीर चोर युद्ध के लिए निकल पड़ा। और निकलने पर ढाल-तलवार लिए हुए युद्ध में अमानुषिक पराक्रम दिखलाते हुए हाथियों की सूंड घोड़ों की टांगें और सैनिकों के शिर उसने काट डाले। तब सैनिकों का विनाश किये हुए उस वीर चोर के ऊपर राजा ने स्वयं आक्रमण किया। तलवार की विद्या में निपुण उस राजा ने हस्त-

स राजा खड्गविद्याऽभिज्ञः करयुक्तिमवलम्ब्य तस्य हस्तात् निस्त्रिंशं छुरिकाञ्च जहार। ततोऽशस्त्रं तं मुक्तशस्त्रो नृपो बाहुयुद्धेन चौरं धरण्यां जीवग्राहमग्रहीत्। प्रातश्च नीयमानं शूलाऽऽरोपणाय वध्य-भूमिं तं सडिण्डिमं चौरं सा वणिक्कन्या हर्म्यपृष्ठतः रत्नवती ददर्श। तञ्च वणितं धूलिलिप्ताङ्गमपि दृष्ट्वा सा काममोहिता तत्क्षणं पितरमुपेत्य प्रोवाच,—"तात! योऽयं वध्यभूमिं नीयते चौरः, अयमेव मया भर्त्ता वृतः, तदेनं नृपात् रक्ष, नो चेदहं एतमनुम्रिये"।

तदाकर्ण्य पिता तामवादीत्,—"पुत्रि! किमिदं भाषसे? चौरोऽयं पौराणां सर्वस्वहृत् राजपुरुषैः वधार्थं नीयते, कथम् एनमहं नृपतेः मोक्षयामि? कीदृशी च ते प्रवृत्तिरियम्?" इति निर्भर्त्स्यमानाऽपि यदा सा निर्बन्धं न तत्याज, तदाऽसौ वणिक् दुहितृवत्सलः राजानं समुपेत्य सर्वस्वेनापि तं चौरं वधमोक्षमयाचत। राजा तु हेमकोटि-शतैः प्रलोभ्यमानोऽपि तं स्वशरीरपणाऽऽनीतं सर्वापहारिणं चौरं न तत्याज।

---

कौशल का आश्रय लेकर उसके हाथ से तलवार और छूरा छीन लिया। तब निःशस्त्र किये हुए उस चोर को शस्त्र-त्याग किये हुए उस राजा ने मल्ल-युद्ध में पृथ्वी पर गिराकर जीवित ही पकड़ लिया और प्रातःकाल डुग्गी बजाकर शूलीपर चढ़ाने के लिये वध्यभूमि की ओर लिये जाते हुए उस, चोर को वणिक्पुत्री उस रत्नवती ने महल के छत पर से देखा। शरीर में घाव लगे हुए तथा धूली से धूसरित अङ्ग रहने पर भी उस चोर को देखकर वह काममोहित हो गयी और उसी समय पिता के पास पहुँच कर उसने कहा—"हे पिता जी! जो कि यह वध्यभूमि की ओर ले जाया जाता है चोर यही मेरे द्वारा पति के रूप में वरण किया गया है, तो इसको राजा से बचाइये, नहीं तो इसके पीछे अनुमरण करूँगी"।

यह सुनकर पिता ने उसको कहा—"हे पुत्री! यह क्या कहती हो? पुरवासियों का सर्वस्व हरनेवाला यह चोर है, राजपुरुषों के द्वारा वध करने के लिए यह ले जाया जाता है, कैसे मैं इसको राजा से बचाऊँगा? यह तुम्हारी कैसी प्रवृत्ति हो गयी है?" इस प्रकार भर्त्सना किये जाने पर भी जब उसने हठ नहीं छोड़ा तब पुत्री से स्नेह करनेवाले उस सेठ ने राजा के पास पहुँच कर अपने सर्वस्व धन के द्वारा भी उस चोर को वधदण्ड से मुक्त करने की याचना की। सैकड़ों करोड़ सुवर्ण से लुभाये जाने पर भी उस राजा ने अपने शरीर को दाव पर चढ़ाकर पकड़े हुए तथा जनता का सर्वस्व हरण करने वाले उस चोर को नहीं मुक्त किया।

प्रज्ञासागरः पिता द्रुतं तत्रोपागमत् तेन च पित्रा आश्वास्यमानः स मोहात् प्रबुध्य प्रलपन्निव सोन्मादं मनोगतमुज्जगार। तच्च पराधीनं मत्वा तत्पितरि नितरां व्याकुले, विदितवृत्तान्तो राजा तत्रैवाऽऽययौ। स राजा तं तथाविधं दृष्ट्वा सप्तमीं मदनावस्थां गतोऽसिति मन्यमानो जगाद,—"कथं ब्राह्मणनिक्षेपः कन्याऽस्मै दीयते ? तया च विना नियतमसौ पश्चिमां दशां यास्यति, अस्मिंश्च विनष्टे अस्य पिता महामन्त्री अपि विनश्यति, अस्य च नाशे मे राज्यनाशः, तदत्र का गतिः ?"।

इत्युक्ताः सर्वास्ताः प्रकृतयः प्राब्रुवन्,—"राजन् ! प्रजानां धर्मरक्षणं राज्ञां परमो धर्मः, तस्य मूलं मन्त्रं विदुः, स च मन्त्रिष्ववस्थितः, मन्त्रिनाशे मूलनाशात् कथं धर्मरक्षा ? अस्य च सपुत्रस्य मन्त्रिणो द्विजस्य वधात् पापञ्च स्यात्, तस्मादासन्नोऽयं धर्मविप्लवः भवता अवश्यं परिहर्त्तव्यः। सा विप्रन्यस्तकुमारिका मन्त्रिपुत्राय

---

घबड़ाये हुए नौकरों के उत्सव त्याग कर देने पर वह पिता प्रज्ञासागर शीघ्र वहाँ पहुँचे, उस पिता के द्वारा आश्वासित किये जाते हुए उसने बेहोशी से होश में आकर प्रलाप करते हुए के समान उन्माद से युक्त होकर अपने मन की सभी बातें कह दीं। यह विषय पराधीन समझ कर उसके पिता के अत्यन्त व्याकुल हो जाने पर, यह समाचार जानकर राजा भी वहीं आ गया। उस राजा ने उसको उस प्रकार देखकर 'उन्माद नामक सातवीं कामावस्था को इसने प्राप्त कर ली है' यह समझ कर कहा—"एक ब्राह्मण की धरोहर कन्या कैसे इसको दी जाय ? और उसके बिना निश्चित ही यह काम की अन्तिम दशा अर्थात् मृत्यु को प्राप्त करेगा। इसके मर जाने पर इसके पिता महामन्त्री भी मर जायँगे। उसके मरने पर मेरे राज्य का विनाश हो जायगा। तो अब क्या उपाय है ?"।

यह कहे हुए उन सभी पुरवासियों ने कहा—"महाराज ! प्रजाओं के धर्म की रक्षा करना राजाओं का परम कर्तव्य है। उसका मूल मन्त्रणा को ही समझा गया है। वह मन्त्रणा मन्त्रियों पर ही आधारित रहती है। मन्त्री के नाश होने से मूल का नाश होता है, फिर धर्म की रक्षा कैसे होगी ? पुत्रसहित इस ब्राह्मण-मन्त्री के वध से पाप भी होगा। इसलिये यह जो धर्म विप्लव सामने में है इसका निवारण आप को अवश्य करना चाहिये। वह ब्राह्मण की धरोहर कन्या मन्त्रिकुमार को दे दी जाय। इसके बाद यदि

ततः पितरि विमुखे प्रत्यावृत्ते सा वणिक्सुता बन्धुभिर्वार्य्यमाणाऽपि अनुमर्त्तुं कृतस्नाना शिविकामारुह्य तस्य दस्योर्वध्यभूमिमगात्; पितरौ बान्धवाश्च रुदन्तस्तामन्वगच्छन्। तस्मिंश्च समये वधकैः स चौरः शूलमधिरोपितः गलत्प्राणस्तथाऽऽगतां स्वजनान्वितां दृष्ट्वा, कथयतो जनात् वृत्तान्तं शृण्वन्, क्षणमश्रूणि मुक्त्वा हसन् प्राणान् जहौ। ततः शूलादवतारितं चौरकलेवरमादाय सा साध्वी वणिक्सुता चितामारुरोह।

तस्मिंश्च क्षणे श्मशाने कृतनिवासः भगवान् भैरवः अदृश्यः अन्तरीक्षात् वाचमिमामुवाच,—"पतिव्रते! अस्मिन् स्वयंवरपतौ तव अनया भक्त्या तुष्टोऽस्मि, तत् मत्तो वरं प्रार्थयस्व"। तन्निशम्य सा वरदं देवं प्रणम्य वरं वव्रे,—"भगवन्! अपुत्रस्य मे पितुः पुत्रशतं भूयात्, येनानन्यसुतोऽयं मा विना प्राणान् न जह्यात्"। इतिवादिनीं तां साध्वीं देवः पुनरन्तरीक्षात् अब्रवीत्—"साध्वि! पितुस्ते पुत्रशतं भवतु, अन्यञ्च वरं वृणीष्व, त्वादृशी दृढसत्त्वा एतावन्मात्रं नार्हति"।

---

तब पिता के असफल होकर लौट आने पर वह वणिक्पुत्री बन्धुओं से रोके जाने पर भी अनुमरण करने के लिये (सती होने के लिये) स्नान करके पालकी पर चढ़कर उस चोर की वध्यभूमि में पहुँची। उसके रोते हुए माता-पिता तथा बन्धु लोग उसके पीछे-पीछे गये। उस समय में वध करने वालों के द्वारा वह चोर शूली पर चढ़ाया गया प्राण निकलते-निकलते उस प्रकार आई हुई तथा स्वजनों से घिरी हुई उस कन्या को देखकर और कहने वाले मनुष्य से उसका वृत्तान्त सुनते हुए उस चोर ने कुछ देर आँसू गिराकर फिर हँसते हुए प्राणों को त्याग दिया। तब शूल से उतारा हुआ चोर का शरीर लेकर वह पतिव्रता वणिक्कन्या चिता पर चढ़ गयी।

उस समय श्मशान में निवास करने वाले भगवान् शङ्कर जी ने अदृश्य होकर आकाश से यह वचन कहा—"हे पतिव्रता! इस स्वयंवर पति में तुम्हारी इस भक्ति से मैं सन्तुष्ट हूँ, तो मुझ से वरदान मांगो"। यह सुन कर उसने प्रणाम करके वरदान देने वाले देवता से वरदान मांगा—"भगवन्! मेरे निपुत्र पिता को सौ पुत्र होवे, जिससे अन्य सन्तान न रहने के कारण वह मेरे विना प्राण त्याग न करें"। यह कहने वाली उस पतिव्रता को उस देवता ने फिर आकाश से कहा—"हे पतिव्रता! तुम्हारे पिता को सौ पुत्र होवे, और कोई अन्य वरदान भी मांगो, तुम्हारी जैसी दृढ़ साहस वाली इतने मात्र ही वरदान के योग्य नहीं होती है"। यह सुन कर उसने

दातव्या, अथ कालान्तरे विप्रः आगमिष्यति, तदा तस्य प्रतिविधानं भविता" इति । एवं प्रकृतिभिरुक्तो नृपतिः "तथा" इति तां कूटकन्यां मन्त्रिपुत्राय दातुं प्रत्यपद्यत ।

अथ लग्नं निश्चित्य राजसुतागृहात् आनीतः कन्यारूपः स मनःस्वामी तं महीपतिं जगाद,—"राजन् ! अन्येन अन्यार्थमानीतां मां यदि अन्यस्मै ददासि, कामं तदस्तु, त्वं हि राजा, धर्माधर्मौ तवोचितौ ; अहन्तु ईदृशेन समयेन विवाहमिच्छामि, तावदहं बलात् पत्या एकशय्यां न नेतव्या; यावदसौ षण्मासान् तीर्थानि परिभ्रम्य न समायाति ; नो चेत् दन्तैः कृत्तजिह्वां मामवधारय" ।

इति तेन समये उक्ते, राज्ञा सम्बोधितः स मन्त्रिपुत्रः प्राप्तनिर्वृतिः "तथा" इति प्रतिपद्य आशु तं परिणीय एकस्मिन् वासके वेत्रिरक्षिते तां मृगाङ्कदत्तां ताञ्च कूटवधूं स्थापयित्वा तीर्थयात्रायै प्रतस्थे । स च मनःस्वामी स्त्रीरूपस्तया मृगाङ्कदत्तया सह एकगृहे समानशयनाशनस्तस्थौ । तथास्थितं तं कदाचित् सा मृगाङ्कदत्ता निशि बहिः-

---

कालान्तर में ब्राह्मण आवेंगे तो तब उसका प्रतिकार होगा" । इस प्रकार प्रजाजनों से कहे हुए उस राजा ने वैसा ही करूँगा" । इस रूप में उस कपट-कन्या को मन्त्रिपुत्र को देना स्वीकार कर लिया ।

तब लग्न निश्चय करके राजकुमारी के घर से लाया हुआ उस कन्या-रूपी मनःस्वामी ने राजा को कहा—"महाराज ! अन्य के द्वारा अन्य के लिए लायी हुइ मुझे यदि अन्य को दे रहे हो तो भले ही वही होवे, तुम राजा हो, धर्म और अधर्म का विचार करना तुम्हारे लिये उचित है । मैं तो इस प्रकार के नियम से विवाह करना चाहती हूँ कि तब तक मैं बलपूर्वक पति के द्वारा एकशय्या पर नहीं लायी जाऊँ, जब तक वह छ महीनों तक तीर्थों का भ्रमण करके न लौट आवे ; नहीं तो दाँतों से जीभ कटी हुई मुझे समझ लो" ।

इस प्रकार उसके द्वारा नियम कहे जाने पर राजा द्वारा समझाये गये हुए उस मन्त्रिपुत्र ने शान्ति प्राप्त करके 'वैसा ही करूँगा" यह स्वीकार करके शीघ्र ही उससे विवाह करके पहरेदारों से सुरक्षित एक ही निवासगृह में उस मृगाङ्कदत्ता को तथा उस कपटवधू को रखकर तीर्थयात्रा के लिए प्रस्थान कर दिया । और स्त्रीरूपधारी वह मनःस्वामी उस मृगाङ्कदत्ता के साथ एक ही घर में एक ही विस्तरे पर तथा एक साथ भोजन करते हुए रहने लगा । उस प्रकार रहने वाले उसको उस मृगाङ्कदत्ता ने रात में बाहर नौकरों के

तदाकर्ण्य सा अवादीत्,—"देव! यदि मयि प्रसन्नोऽसि, तदैष मे भर्त्ता जीवतु, धार्मिकश्च सदा भवतु" इति। "एवमस्तु, अक्षतशरीरस्तव पतिः उत्तिष्ठतु, धार्मिकश्च भवतु, राजा वीरकेतुश्चास्य तुष्यतु"। इति उक्तवति अदृश्यमूर्त्तौ शर्वे नभसि स्थिते सहसा स चौरो जीवन्नक्षतशरीरः समुत्तस्थौ। ततो विस्मितहृष्टो रत्नदत्तो वणिक् तां रत्नवतीं चौरं जामातरञ्चादाय प्रहृष्टैर्बान्धवैः सार्द्धं निजमन्दिरं प्रविश्य लब्धपुत्रवरः स्वाऽऽनन्दोचितमुत्सवमकरोत्। ज्ञातवृत्तान्ततुष्टश्च राजा तदैव तं चौरमेकवीरमानाय्य सेनापतिं व्यधात्। स च चौर्य्यात् निवृत्य तां वणिक्सुतां परिणीय धर्मरतः तया साकं सुखेन कालं निनाय"।

इति कथामाख्याय वेतालो दत्तपूर्वशापभयं तं भूपं पप्रच्छ,—"राजेन्द्र! ब्रूहि, सपितृकां समुपागतां तां वणिक्सुतां दृष्ट्वा चौरेण शूलपृष्ठवर्त्तिना रुदितं हसितञ्च किम्?"! राजा प्रत्यवदत्,—"चौरेण अस्य अकारणबन्धोः वणिजः नाऽऽनृण्यं लब्धमिति दुःखात् रुदितम्; 'किमियं कन्या नृपानपि विहाय चौरे मयि अनुरक्ता!! अहो! स्त्री-

---

कहा—"हे देव! यदि मेरे ऊपर आप प्रसन्न हैं तो यह मेरा पति जी जाय और सदा धार्मिक होवे"। "ऐसा ही होवे, बिना कटे हुए शरीर वाला होकर तुम्हारा पति उठ जाय, और धार्मिक हो जाय तथा राजा वीरकेतु इसके ऊपर प्रसन्न होवें"। आकाश में स्थित अदृश्य स्वरूप वाले शङ्कर जी के ऐसा कहने पर एकाएक वह चोर बिना कटे हुए शरीर वाला तथा जीवित होकर उठ गया। तब आश्चर्यित और प्रसन्न होकर पुत्र का वरदान प्राप्त करनेवाला रत्नदत्त बनियाँ उस रत्नवती को तथा चोर दामाद को लेकर प्रसन्न हुए बन्धुओं के साथ अपने मकान में जाकर अपने आनन्द के अनुसार उत्सव करवाया। समाचार जानकर सन्तुष्ट हुए उस राजा ने उसी समय उस श्रेष्ठ वीर चोर को मँगवा कर सेनापति बना लिया और वह चोरी करना छोड़कर उस वणिक्पुत्री से विवाह करके धर्म में रत होकर उस रत्नवती के साथ सुख से समय बिताने लगा"।

यह कथा कहकर वेताल ने पहले दिये हुए शाप का भय दिखलाकर उस राजा को पूछा—"राजेन्द्र! कहो, पिता के सहित आई हुई उस वणिक्पुत्री को देखकर शूल पर चढ़े हुए उस चोर ने जो रोदन किया और हँसा यह क्यों?" राजा ने जवाब दिया—"चोर ने इस अकारण बन्धु बनिये से उऋणता नहीं प्राप्त की, इस दुःख से रोदन किया। क्यों यह कन्या राजाओं को भी छोड़कर मुझ चोर के ऊपर अनुरक्त हुई! अरे! स्त्रियों का मन कैसे

सुप्तपरिजने शय्यागृहे रहसि प्राब्रवीत्,—"सखि ! कामपि कथामाख्याहि, मे निद्रा नास्ति"। तदाकर्ण्य स स्त्रीरूपो युवा अस्यै कथामेकामकथयत्,—"सखि ! पूर्वमासीत् इला नाम राजा सूर्य्यवंशभवः। गौरीशापेन स्त्रीत्वं प्राप्तस्य तस्य विश्वैकमोहनं रूपमासीत्; तदवलोक्य देवोद्यानगतश्चन्द्रतनयो बुधस्तां चकमे, तयोश्च सङ्गात् पुरूरवाः समजायत"। इति कथां सङ्क्षेपेणोक्त्वा स धूर्त्तः पुनरुवाच,—"सखि ! इत्थं देवताऽऽदेशात् मन्त्रौषधिबलाच्च कदाचित् पुरुषः स्त्री, कदाचन स्त्री च पुमान् स्यात्; तदेवं महतामपि कामजाः संयोगा जायन्ते"। श्रुत्वैतत् सा मुग्धा तरुणी मृगाङ्कदत्ता सहवासविस्रम्भात् प्राह,—"सखि ! श्रुत्वा ते इमां कथां मे अङ्गं सिमिसिमायते, हृदयञ्चेदं सीदतीव, तदेतत् किम् ? ब्रूहि"। तदाकर्ण्य अङ्गनारूपः सः युवा तां प्रत्यवादीत्,—"सखि ! एतानि ते अपूर्वाणि कामचिह्नानि, मया एतानि अनुभूतानि, अहं तव न निगुह्ये"। इति तेनोक्ता सा पुनरवादीत्,—"सखि ! त्वं मे प्राणसमा, तदहं त्वां किं न वच्मि ? अपि केनापि उपायेन इह पुंसः प्रवेशः स्यात् ?"। एव-

---

सोये रहने पर शय्यागृह में एकान्त में कहा—"हे सखी ! कोई कथा कहो, मुझे नींद नहीं आती है"। यह सुनकर वह स्त्रीरूपधारी युवक उसको कहानी कहने लगा—"हे सखी ! प्राचीन काल में सूर्य वंश में उत्पन्न इला नाम का राजा था। पार्वती के शाप से स्त्री बन जाने पर उसका संसार वालों को मोहित कर देने वाला सौन्दर्य था। वह देखकर नन्दन वन में रहने वाले चन्द्रमा के पुत्र बुध उस पर कामासक्त हो गये। उन दोनों के सङ्गम से पुरूरवा नामक राजा उत्पन्न हुए"। यह कथा संक्षेप ही में कहकर उस धूर्त ने फिर कहा—"हे सखी ! इस प्रकार देवता के आदेश से और मन्त्र या औषधि के बल से कभी-कभी पुरुष स्त्री और कभी स्त्री पुरुष हो जाती है। तो इस प्रकार बड़े लोगों के काम-सम्बन्धी संयोग होते रहते हैं"। यह सुन कर वह भोली भाली तरुणी मृगाङ्कदत्ता सहवास के विश्वास से कहने लगी—"हे सखी ! तुम्हारी यह कथा सुनकर मेरा शरीर सिमसिमा गया है और यह हृदय कुछ व्यथित हो रहा है, तो यह क्यों हुआ ? कहो"। यह सुनकर स्त्रीरूपी उस युवक ने उत्तर दिया—"हे सखी ! ये तुम्हारे प्रथम-प्रथम उत्पन्न हुए काम-विकार के चिह्न हैं, मैंने इन्हें समझ लिया है। मैं तुम्हारे लिये कुछ छिपाने योग्य नहीं हूँ"। यह उसके द्वारा कही हुई उसने फिर कहा—"हे सखी ! तुम मेरे प्राण समान हो, तो मैं तुमको क्यों न कह दूँ ? क्या किसी उपाय से यहाँ पुरुष का प्रवेश हो सकता है ?" ऐसा कहती हुई

चित्तमतिविचित्रम्' इति सविस्मयेन हसितञ्च"। इतिवादिनस्तस्य महीपतेरंसात् स वेतालस्तत्क्षणमलक्षितः स्वं निलयं प्रत्यपद्यत। राजाऽपि अविलुप्तधैर्य्यस्तमनुसरन् तं शिंशपातरुमाजगाम।

---

विचित्र होता है, यह सोचते हुए आश्चर्यित होकर हँसा"। यह कहने वाले उस राजा के कन्धे से वह बेताल उसी समय अलक्षित होकर अपने निवास-स्थान पर पहुँच गया। धैर्य से बिना स्खलित हुए वह राजा भी उसका अनु-सरण करते हुए फिर उस शीशम के पेड़ के पास आया।

मुक्तवतीं तां स धूर्त्तपतेः शिष्यो युवा विप्रः प्राह,—"यद्येवं तत्ते वदामि सखि ! अस्ति मे वैष्णवः प्रसादः, येनाहं स्वेच्छया निशि पुरुषः स्यां, तदेषः अद्य त्वत्कृते पुमान् भवामि"। इत्युक्त्वा स मनःस्वामी मुखात् गुलिकामवतार्य्य परमसुन्दरस्वरूपं तस्यै अदर्शयत्। ततस्तयोस्तत्कालोचितरसः कोऽपि रतोत्सवः प्रावर्त्तत। ततश्च स तया मन्त्रिसुतभार्य्यया साकं दिवा नारी, रात्रौ पुमान् भूत्वा कञ्चित् कालमनयत्।

अथ तं मन्त्रिसुतम् आसन्नाऽऽगमनकालं बुध्वा तां तद्भार्य्यामादाय निशि स्वैरं पलाय्य क्वापि प्रायात्। ततश्च तं वृत्तान्तं विदित्वा स मूलदेवः पुनः वृद्धद्विजाऽऽकृतिः शशिना मित्रेण सम्भूय तं यशःकेतुमुपेत्य सविनयमब्रवीत्,—"देव ! आनीतोऽयं मया पुत्रः, तद्देहि मे तां स्नुषाम्" इति। ततः स नृपः सम्मन्त्र्य शापभीतः समभ्यधात्,—"ब्रह्मन् ! न जाने सा ते स्नुषा क्व गता, तत् क्षमस्व, अस्माच्चापराधात् स्वसुतां तव सुताय ददामि"। इत्युक्त्वा तं धूर्त्तराजं क्रोधनिष्ठुरं विब्रुवाणं जरद्विप्ररूपं कथञ्चिदनुनीय तत्सख्ये कृततत्पुत्रव्य-

---

उसको धूर्तपति के शिष्य उस युवक ब्राह्मण ने कहा—"यदि ऐसी बात है तो तुमको कहती हूँ, हे सखी ! मुझे विष्णु का वरदान मिला है, जिससे मैं स्वेच्छा से रात में पुरुष बन सकती हूँ, तो यह मैं आज तुम्हारे लिये पुरुष बनती हूँ"। यह कहकर उस मनःस्वामी ने मुख से गोली बाहर करके अपना अत्यन्त सुन्दर स्वरूप उसको दिखलाया। तब उन दोनों का उस समय के योग्य आनन्द के साथ कोई अनिर्वचनीय सम्भोग उत्सव होने लगा। इसके बाद उसने उस मन्त्रिकुमार की पत्नी के साथ दिन में स्त्री तथा रात में पुरुष बनकर थोड़ा सा समय बिताया।

इसके बाद वह उस मन्त्रिपुत्र को थोड़े ही समय में आने वाला समझकर उसकी उस पत्नी को लेकर रात में स्वेच्छापूर्वक भागकर कहीं चला गया। इसके पश्चात् उस समाचार को जानकर वह मूलदेव फिर वृद्ध ब्राह्मण का रूप धरकर अपने शशी नामक मित्र से मिलकर उस यशःकेतु राजा के पास जाकर विनय के साथ कहने लगा—"महाराज ! मैं अपने इस पुत्र को खोज लाया हूँ, तो अब हमारी वह पुत्रवधू दे दो"। तब वह राजा मन्त्रणा करके शाप देने के भय से भीत होकर कहने लगा—"हे ब्राह्मण ! पता नहीं, वह तुम्हारी पतोहू कहाँ चली गयी, तो क्षमा करो, इस अपराध से अपनी पुत्री तुम्हारे पुत्र को देता हूँ"। यह कहकर उस राजा ने क्रोध से कठोर बने हुए, अप्रिय बोलते हुए वृद्ध ब्राह्मणरूपी उस धूर्तराज का किसी

# अथ पञ्चदशकथा

ततो नृपः पुनस्तथैव गत्वा शिंशपामूलं, तं वेतालं प्राग्वत् स्कन्धमारोप्य गन्तव्याभिमुखं गन्तुमारेभे। वेतालोऽपि यान्तं तं नृपं कथाम् एतामाचचक्षे,—

"आसीत् नेपालराज्ये शिवपुरं नाम नगरम्। तत्र पुरा यशःकेतुर्नाम नृपः यथार्थनामा प्रतिवसति स्म। स मन्त्रिणि प्रज्ञासागरनामके राज्यभारं निवेश्य चन्द्रप्रभानाम्न्या महादेव्या समं भोगानसेवत। कालेन गच्छता तस्य तस्यां देव्यां शशिप्रभा नाम जगन्नेत्रशशिप्रभा कन्या समुदपद्यत। क्रमेण सा यौवनस्था कदाचित् मधुमासे सपरिच्छदा उद्याने यात्रोत्सवं द्रष्टुमगमत्। अत्रान्तरे कश्चित् आढ्यपुत्रो मनःस्वामी नाम द्विजयुवा यात्रादर्शनार्थमागतः तां कुसुमावचयोद्यताम् उत्क्षिप्तबाहुलतिकां लक्षितैकपयोधरां दृष्ट्वा मदनमोहितः तया हृदया सद्योहृतस्य मनसः स्वामी नैवाभवत्। "किमियं मनोभुवो रतिः

---

पन्द्रहवीं कथा—

तब राजा उसी प्रकार फिर शीशम की जड़ में जाकर उस वेताल को उसी प्रकार कन्धे पर उठाकर गन्तव्य स्थान की ओर जाना आरम्भ किया। वेताल ने भी जाते हुए उस राजा को यह कथा कहने लगा,—

"नेपाल राज्य में शिवपुर नाम का नगर था। वहाँ प्राचीन काल में सार्थक नाम वाला यशःकेतु नाम का राजा निवास करता था। वह प्रज्ञासागर नाम के मन्त्री के ऊपर राज्य का भार रखकर चन्द्रप्रभा नाम की महारानी के साथ भोग-विलास करने लगा। कुछ समय बीतने पर उसकी उस महारानी के गर्भ से संसार वालों की आँखों की चाँदनी शशिप्रभा नाम की कन्या उत्पन्न हुई। क्रमशः जब वह युवती हुई तब किसी समय वसन्त ऋतु में अपनी सखियों के परिवार के साथ देवपूजा का उत्सव देखने के लिए गई। इसी बीच किसी धनी का पुत्र मनःस्वामी नाम का कोई ब्राह्मण-युवक देवपूजा दर्शन के लिये आया। वह फूल तोड़ने के लिये उद्यत, भुजा उठायी हुई एक स्तन लक्षित होने वाली उसको देखकर काम से मोहित होकर उस प्रबल कन्या के द्वारा उसी समय हरण किये हुए मन का अधिकारी नहीं रह गया। "क्या यह कामदेव की रति वसन्त के द्वारा

पदेशाय शशिने तां तनयां शशिप्रभां यथाविधि प्रादात्। ततः स मूलदेवः तथाभूतौ वधूवरौ नीत्वा स्वं निलयं प्रायात्। ततस्तस्मिन् मनःस्वामिनि उपस्थिते तस्य मूलदेवस्य अग्रतः तस्य शशिनश्च महान् विवादः समजायत। मनःस्वामी अब्रवीत्,—"एषा शशिप्रभा मह्यं दीयतां, कन्यैवासौ मया गुरोरनुग्रहात् प्राक् परिणीता" इति। शशी प्रोवाच,—"मूर्ख! कोऽस्यास्त्वम्? ममैवैषा भार्य्या, अग्निसाक्षिकमेषा पित्रा मह्यं दत्ता"। इत्थं मायाबलप्राप्तराजपुत्रीनिमित्तं विवदमानयोस्तयोः कोऽपि निर्णयः नाऽऽसीत्।

तद्राजन्! त्वं मम ब्रूहि, कस्येयं भार्य्या उपपद्यते? एतं मे संशयं छिन्धि, समयश्च त्वया मम स्मर्य्यताम्" इति। इति वेतालवचः श्रुत्वा राजा तं प्रत्यभाषत,—"मन्येऽहं शशिन एवासौ न्याय्या भार्य्या, यस्मै तत्पित्रा सर्वजनसमक्षम् अग्निसाक्षिकञ्च धर्म्येण वर्त्मना दत्ता। मनःस्वामी तां चौर्य्येण गान्धर्वधर्मतो भेजे; चौरस्य परस्वेषु स्वत्वं नैव कदाचित् न्याय्यम्" इति। एतत् राज्ञो

---

प्रकार अनुनय-विनय करके उसके पुत्र का बहाना करने वाले उसके मित्र शशि को अपनी उस पुत्री शशिप्रभा का विधिपूर्वक दान दे दिया। तब वह मूलदेव उस प्रकार विवाहित वर और वधू को लेकर अपने घर को चला गया। इसके बाद उस मनःस्वामी के उपस्थित होने पर उस मूलदेव के आगे उस शशी का बहुत बड़ा झगड़ा होने लगा। मनःस्वामी ने कहा—"यह शशिप्रभा मुझे दे दो, पहले ही जब यह कुमारी थी उसी समय मैंने गुरु के अनुग्रह से गान्धर्व विवाह के नियम से इससे विवाह किया था"। शशी ने कहा—"रे मूर्ख! इसका तुम कौन होते हो? यह तो मेरी पत्नी है, अग्नि को साक्षी बनाकर पिता के द्वारा यह मुझे दी गयी है?"। इस प्रकार कपट के बल से प्राप्त की हुई राजकुमारी के कारण झगड़ा करते हुए उन दोनों का कोई निर्णय नहीं हुआ।

तो हे महाराज! तुम मुझे कहो कि किसकी यह पत्नी होनी चाहिये? मेरा यह सन्देह दूर करो। और तुम मेरा नियम स्मरण करो"। यह वेताल का वचन सुनकर राजा ने उसको कहा—"मैं तो समझता हूँ कि शशी की ही यह न्याय-संगत पत्नी होनी चाहिये, जिसको उसके पिता ने सभी लोगों के सामने तथा अग्नि को साक्षी बनाकर धर्म के मार्ग से दी है। मनःस्वामी तो चोरी से गान्धर्व विधि से विवाह किये थे, चोर का दूसरे के धन पर अधिकार करना किसी प्रकार भी न्यायसंगत नहीं है"। यह राजा का वचन

वसन्तसम्भृतानि पुष्पाणि स्वयम् उच्चिनुते ? किं वा स्वयं वनदेवता माधवमर्च्चयितुमागता ?" इति चिन्तयन्तं तं सा नृपनन्दिनी समपश्यत्। सा च दृष्टमात्रे साङ्गे नव इव स्मरे तस्मिन् समुत्सुका पुष्पाणि च स्वाङ्गानि च नास्मरत्।

इत्येवं यावत् तौ अन्योऽन्यानुरक्तौ चित्रलिखिताविवाऽऽस्तां, तावत् सहसा "हा हा" इति रवः समुदभूत्। "किमेतत् ?" इति समुत्क्षिप्तकन्धरं पश्यतोस्तयोः उपलब्धान्यमदगन्धोत्थया रुषा भग्नाऽऽलानो मत्तो द्विपः निर्गत्य मार्गद्रुमान् रुजन् पातिताधोरणो लम्बमानाङ्कुशस्तत्राऽऽगात्। ततश्च परिजने सन्त्रस्तविद्रुते स मनःस्वामी युवा ससम्भ्रमं प्रधाव्य तां राजपुत्रीम् अङ्गैः किञ्चित् कृताश्लेषां भयप्रेमत्रपाऽऽकुलां दोर्भ्यामादाय गजगोचरात् सुदूरमनयत्। अथ कथमपि प्राप्त-परिजना तं युवानं पश्यन्ती माराग्निपुटपाकपच्यमाना सत्वरं राजभवनमगात्।

स तु युवा उद्यानात् तस्मात् स्वान्तःपुरप्रविष्टां तां दृष्ट्वा समुत्सुको व्यचिन्तयत्,—"एतां विना नाहं क्षणमपि स्थातुं जीवितुं वा समुत्सहे,

---

दिये हुए फूलों का स्वयं चयन कर रही है ? अथवा स्वयं वनदेवता वसन्त ऋतु की पूजा करने के लिए आई है ?" ऐसा सोचते हुए उसको उस राजकुमारी ने भी देखा। और वह शरीरधारी नवीन कामदेव के समान उसके देखने मात्र से उत्कण्ठित होकर फूलों को तथा अपने अङ्गों को भी भूल गयी।

इस प्रकार जब तक वे दोनों परस्पर अनुरक्त होकर चित्र में लिखे हुए के समान खड़े थे, तब तक एकाएक 'हा ! हा !' यह शब्द उत्पन्न हुआ। "यह क्या हुआ ?" इस उत्सुकता से गरदन ऊँचा करके उन दोनों के देखते रहने पर अन्य हाथी के मद का गन्ध सूँघ कर उत्पन्न हुए क्रोध से बन्धन तोड़कर, महावत को गिराकर, लटके हुए अंकुश वाला मतवाला हाथी निकलकर रास्ते के वृक्षों को तोड़ता हुआ वहाँ आ गया। तब नौकर लोगों के डरकर भाग जाने पर वह युवक मनःस्वामी शीघ्रता से दौड़कर अपने अङ्गों से थोड़ा सटाकर भय, प्रेम तथा लज्जा से भरी हुई उस राजकुमारी को लेकर हाथी के सामने से दूर ले गया। इसके बाद किसी प्रकार अपने नौकरों के पास पहुंचकर उस युवक को देखती हुई कामानल के पुटपाक में पकायी जाती हुई शीघ्र ही राजभवन में चली गयी।

उस उद्यान से अपने अन्तःपुर में प्रवेश किये हुए उसको देखकर उत्कण्ठित होकर उस युवक ने सोचा—"इसके बिना क्षण भर भी रहने का या

वचनं निशम्य स वेतालः पुनस्तथैव स्वं निलयं प्राप। राजाऽपि दृढ-प्रयत्नः पुनस्तत्र गत्वा तं स्कन्धमधिरोप्य गन्तुं प्रववृते।

---

सुनकर वह वेताल फिर उसी प्रकार अपने निवासस्थान पर चला गया। दृढप्रयत्न वाला वह राजा भी फिर वहाँ जाकर उसको कन्धे पर उठाकर चलना प्रारम्भ कर दिया।

तन्मम श्रीमूलदेवो नामात्र सिद्धो धूर्त्तो गुरुर्गतिः" इति सञ्चिन्त्य कथमपि अवसिते तस्मिन् दिने प्रातस्तस्य गुरोर्मूलदेवस्यान्तिकमगात्; अपश्यच्च तं मित्रेण शशिना नित्यसङ्गतम्। ततश्च समुपेत्य तस्मै प्रणम्य तत् स्वमनीषितं न्यवेदयत्। सोऽपि विहस्य तत् साधयितुं प्रत्यपद्यत।

ततः स धूर्त्तपतिः मुखे योगगुलिकां निक्षिप्य आत्मानं वृद्धब्राह्मणरूपमकरोत्, द्वितीयां गुलिकां तस्य मनःस्वामिनो मुखे निक्षिप्य तं सुकान्तकन्यकारूपं व्यधाच्च। अथ स धूर्त्तराजः तद्रूपं तं समादाय तं राजानमुपेत्य सभायां व्यजिज्ञपत्,—"राजन्! एक एवास्ति मे पुत्रः, तत्कृते दूरात् इयं कन्या याचित्वा आनीता, परं स मे पुत्रः क्वापि गतः, तमन्वेष्टुमहं यामि, तदेषा कन्या त्वया रक्ष्यतां, यावदहं सुतम् अन्विष्यामि, त्वं हि विश्वास्यः रक्षिता" इति। तच्छ्रुत्वा शापभयेन स भूपतिः "तथा" इति प्रतिपद्य सुतां शशिप्रभामानाययामास, जगाद च तां,—"पुत्रि! कन्यामिमां स्वमन्दिरे रक्ष, स्वपार्श्वमेवास्याः शय्यां

---

जीने का साहस मैं नहीं कर सकता हूँ, तो मेरे लिए इस विषय में श्री मूलदेव नामक गुटिका में सिद्ध धूर्त गुरु ही उपाय हैं" यह सोचकर किसी प्रकार उस दिन के बीत जाने पर प्रातःकाल उस गुरु मूलदेव के समीप वह गया और सर्वदा अपने शशी नामक मित्र के साथ रहने वाले उस मूलदेव को उसने देखा। इसके बाद उसके पास जाकर उसको प्रणाम करके उसने अपना वह मनोरथ निवेदन किया। उसने भी हँसकर वह कार्य पूरा करने के लिए स्वीकार कर लिया।

तब उस धूर्तपति ने अपने मुख में मन्त्रसिद्ध गोली डालकर अपने को वृद्ध ब्राह्मण के रूप में बना लिया और दूसरी गोली उस मनःस्वामी के मुख में डालकर उसको सुन्दरी कन्या के रूप में बना लिया। इसके बाद उस धूर्तराज ने कन्या के रूप में उसको लेकर उस राजा के पास पहुंच कर सभा में निवेदन किया—"महाराज! मेरा एक ही पुत्र है, उसके लिये दूर से यह कन्या माँगकर लाया हूँ, लेकिन वह मेरा पुत्र कहीं चला गया है। उसको खोजने के लिये मैं जा रहा हूँ, तो जब तक मैं पुत्र को खोजता हूँ तब तक इस कन्या को तुम रक्खो; क्योंकि तुम विश्वासपात्र हो, रक्षा करोगे"। यह सुनकर शाप के भय से उस राजा ने "वैसा ही करूँगा" इस प्रकार स्वीकार करके अपनी पुत्री शशिप्रभा को बुलवाया और उसको कहा—"हे पुत्री! इस कन्या को अपने भवन में ही रक्खो और अपने बगल में ही इसका बिस्तर लगवाना"। इस प्रकार पिता से आदेश प्राप्त की हुई उस

# अथ षोडशकथा।

अथ राजा तं वेतालं नीत्वा गच्छति स्म। वेतालश्च तमब्रवीत्,—"राजन्! शृणु अपूर्वामेकां कथाम्,—

अस्ति हिमवान् नाम सर्वरत्नभूमिर्नगेन्द्रः, यो हि गौरीगङ्गयोः हरभार्य्ययोस्तुल्यप्रभवः, यश्च कुलभूभृताम् अग्रणीः सूर्य्येणाप्यदृष्ट-पृष्ठदेशः अभिमानोन्नतः सर्वत्र गीयते। तस्य सानोरुपरि काञ्चनपुरं नाम पुरं रविणा न्यासीकृतं रश्मिवृन्दमिव विभाति। तत्र जीमूतकेतुरिति श्रीमान् विद्याधरपतिः पुरन्दर इव मेरौ समध्युवास। तस्य गृहोद्याने कुलक्रमाऽऽगतः कल्पतरुः स्थितः। स राजा जीमूतकेतुः तं देवस्वरूपं कल्पतरुमाराध्य तत्प्रसादात् जातिस्मरं बोधिसत्त्वांशसम्भवं दानवीरं महासत्त्वं सर्वभूतानुकम्पिनं गुरुशुश्रूषणपरं जीमूतवाहनं नाम पुत्रं प्राप।

कालेन सम्प्राप्तयौवनं तं स राजा सद्भिस्तद्गुणैः सचिवैश्च प्रेरितः

---

## सोलहवीं कथा—

इसके बाद वह राजा उस वेताल को लेकर विदा हुआ और वेताल ने भी उसको कहा—महाराज! एक अपूर्व कहानी सुनो—

सभी रत्नों का आश्रय हिमालय नाम का गिरिराज है। जो कि शङ्कर जी की दोनों पत्नी पार्वती और गङ्गा का समान उत्पत्तिस्थान है। जो सभी कुलपर्वतों का अग्रेसर सूर्य के द्वारा भी अदृष्ट पीठ भागवाला, अभिमान से ऊँचा सब जगह वर्णन किया जाता है। उसकी चोटी के ऊपर सूर्य के द्वारा धरोहर रक्खे हुए किरणसमूह के समान काञ्चनपुर नाम का नगर शोभा पाता है। वहाँ जीमूतकेतु नाम का बहुत धनी विद्याधरों का राजा सुमेरु पर्वत पर इन्द्र के सदृश निवास करता था। उसके घर के बगीचे में वंश के क्रम से आया हुआ कल्पवृक्ष था। उस राजा जीमूतकेतु ने उस देवस्वरूप कल्पवृक्ष की उपासना करके उसके प्रसाद से पूर्वजन्म का स्मरण करने वाला बोधिसत्त्व के अंश से उत्पन्न, दानवीर, महासाहसी, सभी प्राणियों पर दया करने वाला, गुरुओं की शुश्रूषा करने वाला जीमूतवाहन नाम का पुत्र प्राप्त किया।

कुछ समय में यौवन प्राप्त किये हुए उस पुत्र को अच्छे गुण वाले सज्जन

प्रकल्पय" इति पित्राऽऽदिष्टया तया स कन्यारूपः द्विजयुवा मनःस्वामी निजमन्तःपुरं नीतः ।

अथ तस्मिन् मूलदेवे यथारुचि प्रयाते कन्यारूपः स मनःस्वामी प्रियाऽन्तिके अहर्निशं तिष्ठन् कतिपयैः दिवसैः सखीमिव प्रीति-विस्रम्भशालिनीं विदित्वा, एकदा विरहक्षामां शयनीयलुठत्तनुं तां राजसुतां रात्रौ आसनशयनस्थितः पप्रच्छ,—"सखि ! किं त्वं दिने दिने पाण्डुरकान्तिः क्षीयमाणा कान्तवियुक्तेव दुःखिता तिष्ठसि ? ब्रूहि, स्निग्धमुग्धे सखीजने मयि कोऽविश्वासः ? न चेत् मम वदिष्यसि, तदाऽहं न भोक्ष्ये" । तदाकर्ण्य सा विनिश्वस्य शनैरब्रवीत्,—"सखि ! किं मे त्वयि अविश्वासः ? शृणु, कथयामि,—

एकदाऽहं यात्रां द्रष्टुं मधूद्यानं गताऽभूवम्, अपश्यञ्च तत्र कञ्चित् सुभगं हिममुक्तेन्दुसश्रीकं दर्शनोद्दीपितस्मरं मधुमासमिवालङ्कृत-काननं ब्राह्मणपुत्रम् । यावत् इमे समुत्सुके तन्मुखेन्दुद्युतिसुधापायिनी लोचने मे चकोरायितुं प्रवृत्ते, तावत् मदस्रावी निरर्गलः अकाल-

---

राजकुमारी के द्वारा वह कन्यारूपी ब्राह्मण-युवक मनःस्वामी अपने अन्तःपुर में लाया गया ।

इसके बाद उस मूलदेव के अभिलषित स्थान पर चले जाने पर कन्या-रूपी उस मनःस्वामी ने प्रियतमा के समीप रात-दिन रहते हुए कुछ ही दिनों में सखी के समान प्रेम तथा विश्वास से युक्त समझ कर एक दिन विरह से सूखी हुई, विस्तरे पर शरीर गिरायी हुई उस राजकुमारी को रात में नजदीक के विस्तरे पर स्थित होकर पूछा—"हे सखी ! क्यों तुम दिन प्रतिदिन पाण्डुकान्ति तथा क्षीण शरीर होती हुई प्रियतम-वियोगिनी के समान दुखी हो रही हो ? कहो, स्नेही तथा भोली भाली मुझ सखी के ऊपर कैसा अविश्वास ? यदि मुझे नहीं कहोगी तो मैं खाऊँगी नहीं" । यह सुनकर उसने लम्बी साँस लेकर धीरे धीरे कहा—"हे सखी ! क्यों मेरा तुम्हारे ऊपर अविश्वास होगा" ? सुनो, कहती हूँ—

एकबार मैं देवपूजा देखने के लिये वसन्त ऋतु के उद्यान में गयी हुई थी, वहाँ मैंने अत्यन्त सुन्दर, कुहरे से मुक्त चन्द्रमा के समान शोभमान, अपने दर्शन से कामोद्दीपित करनेवाले वसन्त ऋतु के समान उपवन की शोभा बढ़ाने वाले किसी ब्राह्मण-कुमार को देखा । जब तक उत्सुक होकर उसके मुखचन्द्र की कान्तिरूपी अमृत को पीती हुई मेरी ये आँखें चकोर के समान आचरण करने लगीं, तबतक अकालिक काले बादल के समान बन्धन

यौवराज्ये अभिषिक्तवान्। कदाचित् यौवराज्यस्थितः स जीमूतवाहनः हितैषिभिः पितृमन्त्रिभिरुपेत्य जगदे,—"युवराज! योऽयं कल्पतरुः सर्वकामदः सर्वभूतानामधृष्यश्च तवोद्याने तिष्ठति, अयं तव सदा पूज्यः; अस्मिन् अनुकूले स्थिते शक्रोऽपि नास्मान् बाधितुं शक्नुयात्, किमुतापरः?"। एतदाकर्ण्य स जीमूतवाहनः अन्तरचिन्तयत्,—'अहो बत! ईदृशममरपादपं प्राप्यापि पूर्वैः पुरुषैरस्माकं तादृशं फलं किमपि नासादितं, केवलं कैश्चिदपि कृपणैस्तैः कश्चिदपि अर्थः अर्थितः, तेन चात्मा च महात्मा चैषः उभौ लाघवं नीतौ, तदहमस्मात् मनोरथमभीष्टं साधयामि' इत्यालोच्य स महात्मा पितुरन्तिकमाजगाम। आगत्य च विहिताशेषशुश्रूषया परितोषितं सुखमासीनं पितरमेकान्ते व्यजिज्ञपत्,—"तात! त्वमेव जानासि यदेतस्मिन् संसारसागरे आशरीरमिदं सर्वं धनं वीचिविभ्रमचञ्चलं, विशेषेण अचिरस्थायिनी प्रकाशपलायिनी सन्ध्याविद्युदिव चला लक्ष्मीः न कुत्रापि कदाऽपि स्थिरा, एकः परोपकार एवास्मिन् संसारे अनश्वरः युगान्तशतसाक्षिणी धर्म-

---

मन्त्रियों से प्रेरित होकर उस राजा ने युवराज के पद पर अभिषिक्त किया। किसी समय युवराज के पद पर स्थित वह जीमूतवाहन हित चाहने वाले पिता के मन्त्रियों के द्वारा आकर कहा गया—"हे युवराज! जो कि यह सभी प्राणियों से अनभिभवनीय और सभी मनोरथों को पूर्ण करने वाला कल्पवृक्ष तुम्हारे बगीचे में है, यह तुम्हारे लिये सदा पूजनीय है। इसके अनुकूल रहने पर इन्द्र भी हम लोगों को कष्ट नहीं दे सकते हैं; दूसरे की बात ही क्या?" यह सुनकर उस जीमूतवाहन ने मनही मन सोचा—"अरे! खेद है! कि इस प्रकार के देववृक्ष को प्राप्त करके भी हमारे पूर्व पुरुषों ने कुछ उस प्रकार का फल नहीं प्राप्त किया, उन लोगों में कुछ कंजूस लोगों ने केवल धन माँगा। उससे अपने को और इस महात्मा कल्पवृक्ष को उन लोगों ने लघुता प्राप्त करा दी। इससे मैं अपना अभीष्ट मनोरथ सिद्ध करूँ" यह सोचकर वह महापुरुष अपने पिता के पास आया। और आकर सभी प्रकार की शुश्रूषा से परितुष्ट किये हुए तथा सुख से बैठे हुए पिता को उसने निवेदन किया—"पिता जी! आप तो जानते ही हैं जो कि इस संसार समुद्र में केवल शरीर पर्यन्त रहने वाला यह सम्पूर्ण धन लहरों के समान चञ्चल है, विशेष रूप से तो अत्यल्प काल तक रहने वाली, प्रकाश मिलते ही दूर भागने वाली सन्ध्या काल की विद्युल्लता के समान चञ्चल यह लक्ष्मी कभी भी कहीं भी स्थिर होकर नहीं रहती है। इस संसार में अनश्वर एक परोपकार ही सैकड़ों

कालमेघनिभः महागजो गर्जन् अकस्मात् तत्राऽऽगात् तत्सम्भ्रमाच्च परिजने भयविद्रुते भयविह्वला अहं तेन विप्रपुत्रेण दोर्भ्यामुत्क्षिप्य दूरतो नीता ; तदा श्रीखण्डलिप्तेव सुधासिक्तेव न जाने, कामपि तदङ्गस्पर्शेन दशामन्वभवम् । क्षणेन च परिजनेन मिलितेन अवशाऽहमिहाऽऽनीता स्वर्गादिव भुवस्तले निक्षिप्ताऽस्मि । तदा प्रभृति तैस्तैः सङ्कल्पैः कल्पितसङ्गमं तं प्राणदं प्रियं पार्श्वस्थमिव सदा पश्यामि, सुप्ताऽपि तमेव आश्लिष्यामि, किं बहुना, तमेव सततं चिन्तयन्ती कालं हरामीति । तदेष मां प्राणेश्वरविरहानलः दिवानिशं दहति" ।

इति तस्या वाक्सुधया पूरितश्रवणविवरः स मनःस्वामी सानन्दः आत्मानं कृतार्थं मन्यमानः आत्मप्रकाशनावसरोऽयमिति विनिश्चय मुखात् गुलिकां निष्कास्य स्वं रूपं प्रकटीचक्रे, जगाद च,—"सुन्दरि ! स एवाहं, यस्त्वया उद्याने दर्शनक्रीतश्चिरदासतां नीतः । त्वद्विरहातुरोऽहमिदं कन्यारूपं गृहीत्वा त्वत्सकाशमागतोऽस्मि । तदिदानीं

---

से खुला हुआ मतवाला गजराज गरजते हुए वहाँ पहुँचा । उसकी घबड़ाहट से नौकरों के भय से भाग जाने पर भय से व्याकुल हुई मैं उस ब्राह्मण-कुमार के द्वारा दोनों भुजाओं से उठाकर दूर ले जायी गयी, तब उसके अङ्ग का स्पर्श होने से मैंने श्रीखण्ड चन्दन से लिपी हुई के समान, अमृत से सींची हुई के समान, पता नहीं, किसी अनिर्वचनीय दशा का अनुभव किया । फिर कुछ ही देर में मिले हुए नौकरों के द्वारा विवश बनी हुई मैं यहाँ लायी गयी । मानो स्वर्ग से मैं भूतल पर गिरा दी गयी । उस दिन से लेकर उन-उन मनोरथों से सङ्कल्पित सङ्गमवाले उस प्राण देने वाले प्रियतम को पास में स्थित होने के समान सदा देखती हूँ, सोने पर भी उसी का आलिङ्गन करती हूँ, बहुत क्या कहूँ ? सतत उसी का चिन्तन करती हुई समय बिताती हूँ । अतः वही यह प्राणेश्वर का वियोगानल मुझे दिन-रात जलाता रहता है" ।

उसके इस वचनरूपी अमृत से भरे हुए कर्णविवर वाले आनन्दित होकर अपने को पूर्ण मनोरथ मानते हुए 'अपने को प्रकट करने का यही अवसर है' यह सोच कर उस मनःस्वामी ने मुह से गोली निकाल कर अपना स्वरूप प्रकट किया और कहा—"हे सुन्दरी ! मैं वही हूँ जो तुम्हारे द्वारा वाटिका में दर्शन से खरीदा हुआ सदा के लिये दास बनाया गया है । तुम्हारे विरह से व्याकुल बना हुआ मैं इस कन्या रूप को धारण करके तुम्हारे पास आया हूँ । तो इस समय [illegible]

यशसी प्रसूते। तात! तत् क्षणिकेषु एषु सर्वेषु अस्माभिरीदृशः कल्पतरुः किमर्थं रक्ष्यते? यैश्च पूर्वैरयं 'मम मम' इति आग्रहेण रक्षितः, तैरिदानीं कुत्र गतम्? तेषां कस्यायम्? अस्य वा ते के? तस्मात् परोपकारैकफलसिद्धये त्वदाज्ञया इमं कामदं कल्पपादपम् आराधयामि"।

अथ पित्रा "तथा" इति अभ्यनुज्ञातः स जीमूतवाहनः कल्पतरुं गत्वा उवाच,—"देव! त्वया अस्मत्पूर्वेषामभीष्टाः कामाः पूरिताः, तन्ममैकमनन्यं कामं परिपूरय; यथा पृथ्वीमदरिद्रां पश्यामि, तथा करोतु देवः। भद्रमस्तु ते, व्रज, लोकाय अर्थिने त्वं मया दत्तोऽसि"। इतिवादिनि कृताञ्जलौ जीमूतवाहने "त्यक्तस्त्वया एषोऽहं यातोऽस्मि" इति वाक् तस्मात्तरोरुदभूत्। क्षणेन च स कल्पतरुः दिवः समुत्पत्य भुवि तथा वसूनि अवर्षत्, यथा न कोऽपि दुर्गत आसीत्। ततस्तस्य तया सर्वजीवानुकम्पया त्रैलोक्ये यशः पप्रथे।

अथ तद्गोत्रजाः सर्वे मात्सर्य्यात् असहिष्णवः कल्पपादपरहितं

---

युगान्त तक रहने वाले धर्म और यश को उत्पन्न करता है। पिता जी! तो इन सभी वस्तुओं के क्षणिक होने पर हम लोग इस प्रकार का कल्पवृक्ष क्यों रक्खे हुए हैं? जिन पूर्वजों के द्वारा यह 'मेरा है, मेरा है' यह कहकर आग्रह के साथ रक्खा गया था, वे लोग इस समय कहाँ गये? उन में से किसका यह है? और इसके वे लोग कौन हैं? इसलिए एक परोपकाररूपी फल की सिद्धि के लिए आप की आज्ञा से इस मनोरथपूर्ण करने वाले कल्पवृक्ष की उपासना करता हूँ।

इसके बाद पिता के द्वारा "वैसा ही करो" इस प्रकार आज्ञा प्राप्त किये हुए उस जीमूतवाहन ने कल्पवृक्ष के पास जाकर कहा—"हे देव! तुम हमारे पूर्वजों के अभीष्ट मनोरथ पूर्ण किये हो तो मेरा एक अद्वितीय मनोरथ पूर्ण करो। जिस प्रकार पूरी पृथ्वी को अदरिद्र बनी हुई (धनी बनी हुई) देखूँ, वैसा आप करें। तुम्हारा कल्याण होवे, तुम जाओ माँगने वाले लोगों के लिए तुम मेरे द्वारा दिये गये हो"। हाथ जोड़कर जीमूतवाहन के ऐसा कहने पर "तुम्हारे द्वारा परित्याग करने से यह मैं जा रहा हूँ" यह वाणी उस वृक्ष से उत्पन्न हुई। कुछ ही देर में वह कल्पवृक्ष आकाश में उड़कर पृथ्वी के ऊपर इस प्रकार धन बरसने लगा जिससे कोई भी दरिद्र नहीं रहा। तब उसका इन सभी जीवों पर दया से तीनों भुवन में यश फैल गया।

इसके बाद द्वेष से असहिष्णु सभी उसके दायादगण कल्पवृक्ष से रहित

कामसन्तप्तं मां प्रसाददृष्ट्या निर्वापय" इति। एवं वदन्तं तं प्राणेश्वरं प्राप्तं विलोक्य सा राजसुता क्षिप्रं स्नेहाऽऽश्चर्य्यत्रपाऽऽकुला सहसा किंकर्त्तव्यविमूढा समपद्यत। ततश्च गान्धर्वविवाहेन कृतमङ्गलौ तौ प्रेम्णा परमेण तत्र निभृतं तस्थतुः। ततः स मनःस्वामी तत्र द्विरूपभृत् तस्थौ, दिवा सगुलिकः कन्यारूपः, रात्रौ निष्कासितगुलिकः पुमान्।

अथ गच्छत्सु दिनेषु यशःकेतोर्नृपस्य श्यालको मृगाङ्कदत्तः मृगाङ्कदत्तां नाम निजां सुतां द्विजातये महामन्त्रिणः प्रज्ञासागरस्य सूनवे महाऽऽडम्बरपुरःसरं प्रददौ। तस्मिन् मातुलपुत्र्या विवाहे सा राजपुत्री शशिप्रभा निमन्त्रिता मातुलगृहं प्रायात् तया सह सोऽपि कन्यारूपी मनःस्वामी समायात्। तत्र तं कान्तं कन्यकारूपं मनःस्वामिनं दृष्ट्वा स मन्त्रिसुतः स्मरव्याधबाणैर्नितरां हतोऽभवत्। ततस्तया कपटकन्यया मुषितचित्तः स मन्त्रिसुतः स्ववधूसहितोऽपि शून्यमात्मानं मन्यमानः स्वगृहं जगाम; आगत्य च गृहं तन्मुखलावण्यध्यानासक्तो मोहमगात्। "किमेतत्?" इति सम्भ्रान्ते परिजने उत्सवोज्झिते स

---

दृष्टि से शीतल करो"। ऐसा कहते हुए उस प्राणपति को पहुँचे हुए देखकर वह राजकुमारी शीघ्र ही स्नेह, आश्चर्य तथा लज्जा से भरी हुई एका-एक कर्तव्य निर्णय करने में असमर्थ हो गयी। इसके बाद गान्धर्व-विवाह के द्वारा कल्याण मनाकर वे दोनों बहुत बड़े प्रेम से वहाँ गुप्तरूप से रहने लगे। तब वह मनःस्वामी वहाँ दो रूप धारण करके रहता था। दिन में गोली मुह में डालकर कन्या के स्वरूप में, और रात में गोली निकाल कर पुरुष के रूप में।

इसके बाद कुछ समय बीतने पर मृगाङ्कदत्त नाम के यशःकेतु राजा के शाले ने ब्राह्मण महामन्त्री प्रज्ञासागर के पुत्र को महा आडम्बर के साथ मृगाङ्कदत्ता नाम की अपनी पुत्री का प्रदान किया। मामा की पुत्री के उस विवाह में निमन्त्रित होकर वह राजकुमारी शशिप्रभा मामा के घर गयी। उसके साथ कन्यारूपी वह मनःस्वामी भी गया। वहाँ सुन्दरी कन्यारूपी उस मनःस्वामी को देखकर वह मन्त्रिकुमार कामदेवरूपी व्याध के बाणों से अत्यन्त ताड़ित हुआ। तब उस कपटकन्या के द्वारा हरण किये गये मन वाला वह मन्त्रिकुमार अपनी पत्नी के साथ रहने पर भी अपने को शून्य समझता हुआ अपने घर गया। और घर आकर उसके मुख के लावण्य के ध्यान में आसक्त होकर बेहोश हो गया। "यह क्या हुआ?" इस प्रकार

तं जीमूतवाहनं सपितृकं सुजयं मत्वा सम्भूय च तस्य राज्यापहरणाय समनह्यन्त। तदवलोक्य जीमूतवाहनः पितरमवादीत्—"तात! धृतायुधेन त्वया योद्धुं कस्य शक्तिरस्ति? किन्तु अस्य पापस्य विनाशिनः शरीरस्य कृते बन्धून् हत्वा कोऽकृपणो राज्यमाकाङ्क्षति? तत् किं नो राज्येन? अन्यत्र क्वचित् गत्वा वयं धर्ममेव आचरिष्यामः, येन लोकयोरुभयोः सद्गतिः स्यात्। कृपणा एते दायादा राज्यलोलुपा मोदन्ताम्"। इतिवादिनं तं जीमूतकेतुरब्रवीत्,—"पुत्र! अहं त्वदर्थं राज्यमिच्छामि, त्वञ्चेत् कृपया तत् जहासि, तदा वृद्धस्य मे तेन किम्?"। इत्थं कृताभ्यनुज्ञेन पित्रा मात्रा च समन्वितः स जीमूतवाहनः राज्यं विहाय मलयाचलमगात्, तत्र स रचिताऽऽश्रमः पितरौ शुश्रूषमाणस्तस्थौ।

एकदा स इतस्ततो भ्रमन् विश्वावसुनाम्नः सिद्धराजस्य तत्र निवासिनः पुत्रं मित्रावसुं नाम दृष्ट्वा सम्भाष्य च मित्रम् अकरोत्। ततश्चैकदा स जीमूतवाहनः उपवने स्थितं देव्या गौर्य्या आयतनं दृष्ट्वा प्रविवेश, ददर्श च तत्र उपवीणयन्तीं, सखीजनपरिवृतां, शैलबाला-

---

अतएव पिता सहित उस जीमूतवाहन को जीतना सरल मानकर इकठ्ठा होकर उसका राज्य अपहरण करने के उद्देश्य से युद्ध करने के लिये संनद्ध हो गये। यह देखकर जीमूतवाहन ने पिता को कहा—"पिता जी! आप हथियार धारण किये रहेंगे तो आप से युद्ध करने की किसकी शक्ति है? किन्तु इस विनाशी तुच्छ शरीर के लिये बन्धुओं को मारकर कौन उदारमन वाला राज्य चाहेगा? तो हम लोगों को राज्य से क्या प्रयोजन? अन्यत्र कहीं जाकर हम लोग धर्म का ही आचरण करेंगे, जिससे दोनों लोकों में सद्गति होवे। राज्य के लोभी ये नीच दायादगण प्रसन्न होवें"। ऐसा कहने वाले उस जीमूतवाहन को जीमूतकेतु ने कहा—"पुत्र! मैं तुम्हारे लिए राज्य चाहता हूँ, यदि तुम दया से युक्त होकर उसे छोड़ रहे हो, तो मुझ वृद्ध को उससे क्या प्रयोजन?" इस प्रकार आज्ञा देने वाले पिता और माता से युक्त होकर वह जीमूतवाहन राज्य छोड़कर मलय पर्वत पर चला गया। वहाँ वह आश्रम बनाकर माता-पिता की सेवा करते हुए रहने लगा।

एक बार इधर-उधर घूमते हुए उसने वहाँ निवास करने वाले विश्वावसु नामक सिद्धराज के पुत्र मित्रावसु को देखकर स्वागत करके उसको मित्र बना लिया। तब एक बार उस जीमूतवाहन ने वाटिका में स्थित पार्वती देवी का मन्दिर देखकर उसमें प्रवेश किया और वहाँ वीणा बजाकर गीत

ऽऽराधनार्थं स्थितां, लोचनलावण्यदर्शनेन लज्जितैरिव निश्चलैर्मृगैराकर्ण्यमानसङ्गीतवीणारवाम्, अञ्जनेन कृष्णां कर्णमूलं विमथ्नतीं पांडवचमूमिव तारकां बिभ्रतीं, परस्परोपमर्देन मुखेन्दोरिव दर्शनमतृप्तमभिवाञ्छन्तौ उन्मुखौ स्तनौ दधतीं, धातुः सृष्टवतो मुष्टिग्रहेणेव निपीडिते वलीमग्नाङ्गुलीमुद्रे मध्ये क्षाममनोरमां कामपि कन्यकाम्। तया च दृष्टया तन्व्या स जीमूतवाहनः सद्यः दृष्टिमार्गप्रविष्टया मुषितचित्तोऽभूत्। साऽपि तं भूषितोद्यानम् उत्कण्ठाविकारप्रदं कामाङ्गदाहवैराग्यात् वनमाश्रितं मधुमिव दृष्ट्वा अनुरागविवशा तथा विह्स्ततां भेजे, यथा सखीनां व्याकुलतामधात्। ततः स जीमूतवाहनस्तस्याः सखीमपृच्छत्,—"भद्रे! तव सख्याः किं धन्यं नाम? को वा वंशोऽनया अलङ्कृतः?"। तदाकर्ण्य सखी प्राब्रवीत्,—"महाभाग! इयं हि नाम्ना मलयवती, मित्रावसोः स्वसा, सिद्धराजस्य दुहिता"। एवमुक्त्वा सा सखी सहृदया तं जीमूतवाहनं, सहाऽऽगतं

---

गाती हुई, सखी लोगों से घिरी हुई, पार्वती जी की उपासना के लिए बैठी हुई, आँख का सौन्दर्य देखने से लज्जित हुए के समान निश्चल हरिणों के द्वारा सुने जाते हुए सङ्गीत तथा वीणा शब्दवाली, काजर से काली पाण्डवों की सेना के समान कर्णमूल का मथन करने वाली (कर्ण की सेना नष्ट करने वाली, दूसरे पक्ष में—कान की जड़ को दबाने वाली) नेत्रतारका धारण करने वाली, आपस में एक दूसरे को धक्का देते हुए अतृप्त होकर मुखरूपी चन्द्रमा का दर्शन चाहते हुए के समान ऊपर मुख किये हुए दोनों स्तनों को धारण करने वाली, बनाने वाले विधाता के मुट्ठी पकड़ने से दबाये हुए तथा बली में धँसी हुई अङ्गुलियों के चिह्नवाले मध्य भाग में कृशता से मनोहारिणी किसी कन्या को देखा। देखी हुई तथा दृष्टि के मार्ग से अन्दर में प्रवेश करने वाली उस सुकुमारी के द्वारा वह जीमूतवाहन उसी समय चुराये गये मनवाला हो गया। वह भी उद्यान की शोभा बढ़ाने वाले तथा उत्कण्ठा का विकार उत्पन्न करने वाले उस जीमूतवाहन को कामदेव का शरीर जल जाने से वैराग्य के कारण वन का आश्रय लिये हुए वसन्त के समान देखकर अनुराग से उस प्रकार की व्याकुलता से युक्त हुई कि जिससे सखियों को भी व्याकुलता उत्पन्न हो गयी। तब उस जीमूतवाहन ने उसकी सखी को पूछा—"हे भली स्त्री! तुम्हारी सखी का कौन सा धन्य नाम है? और कौन सा वंश इसके द्वारा अलंकृत हुआ है?"। यह सुनकर सखी ने उत्तर दिया—"महाभाग! इसका नाम मलयवती है, यह मित्रावसु की बहन है तथा सिद्धों के राजा विश्वावसु की पुत्री है"। उस जीमूतवाहन को यह कहकर उस

एतत् सर्वमाकर्ण्य बोधिसत्त्वांशसम्भवः स जीमूतवाहनो दृष्ट्वा च सर्वं गाढकरुणो व्यचिन्तयत्,—"हन्त ! अयं शङ्खचूडो नाम नागः वासुकिना आहाराय तार्क्ष्याय प्रहितः, इयञ्चास्य जननी स्नेहेनान्वागता एकसुता चेयं दुःखिनी नितान्तमार्त्ता विलपति, तदेनमेवमार्त्तम् एकान्तनाशिना देहेन यदि न रक्षामि साम्प्रतं, तन्मे निष्फलं जन्म धिक् !" इत्यालोच्य मुदा समुपगम्य जीमूतवाहनः वृद्धां तामुवाच,—"नागमातः ! अहं ते पुत्रं रक्षामि, मा रुद"। इति श्रुत्वा सा वृद्धा गरुडशङ्किनी सन्त्रस्ता,—"तार्क्ष्य ! मां भुङ्क्ष्व" इति जगाद। शङ्खचूडः प्राब्रवीत्,—"मातः ! नैषः तार्क्ष्यः, मा त्रासं कार्षीः क्वायं चन्द्र इव अन्तरिन्द्रियमाह्लादयति ! क्व चासौ तार्क्ष्यः भयमुत्पादयति !" इति शङ्खचूडेनोक्ते जीमूतवाहनोऽब्रवीत्,—"अम्ब ! अहं विद्याधरः ते सुतं रक्षितुमायातः स्वमेतत् शरीरं वस्त्रच्छन्नं गरुत्मते क्षुधिताय दास्यामि, त्वमेतं सुतं नीत्वा गृहं व्रज"। तदाकर्ण्य वृद्धा अवदत्,—"मा मैवं, त्वं मम अधिकः पुत्रः, यस्य ईदृशेषु अस्मासु ईदृशी कृपालुता"। एतदाकर्ण्य स जीमूतवाहनः पुनरब्रवीत्,—

---

यह बात सुनकर तथा सब कुछ देखकर बोधिसत्त्व के अंश से उत्पन्न हुए अत्यन्त दयालु उस जीमूतवाहन ने सोचा—"अरे ! यह शङ्खचूड़ नाम का नाग वासुकि के द्वारा गरुड़ के भोजन के लिये भेजा गया है। और यह इसकी माता स्नेह के कारण पीछे-पीछे आयी है, यह एक ही पुत्रवाली है अतएव दुखी और अत्यन्त आर्त होकर विलाप कर रही है। तो इस निश्चित नष्ट होने वाले शरीर से इस प्रकार आर्त बने हुए इसकी रक्षा यदि इस समय मैं नहीं करता हूँ तो मेरे निष्फल जन्म को धिक्कार होवे"। यह सोचकर प्रसन्नता के साथ पहुँच कर जीमूतवाहन ने उस वृद्धा को कहा—"हे नागमाता ! मैं तुम्हारे पुत्र की रक्षा करूँगा, तुम मत रोओ"। यह सुनकर गरुड़ की शंका करनेवाली सन्त्रस्त होकर उस वृद्धा ने—"गरुड़ ! मुझे खाओ, मुझे खाओ" यह कहा। तब शङ्खचूड़ ने कहा—"माता जी ! यह गरुड़ नहीं है, मत डरो ; कहाँ तो यह चन्द्रमा के समान आन्तरिक इन्द्रियों को आह्लादित करता है, और कहाँ वह भय उत्पन्न करने वाला गरुड़" यह शङ्खचूड़ के कहने पर जीमूतवाहन ने कहा—"माता जी ! मैं विद्याधर हूँ, तुम्हारे पुत्र की रक्षा करने के लिये आया हूँ, अपने इस शरीर को वस्त्र से ढककर भूखे गरुड़ को दूँगा, तुम अपने इस पुत्र को लेकर घर चली जाओ"। यह सुनकर वृद्धा ने कहा—"ऐसा नहीं, ऐसा नहीं, तुम तो मेरे विशेष पुत्र हो, जिसकी इस प्रकार के हमलोगों के ऊपर इस प्रकार की दया है"। यह सुनकर उस जीमू-

तं जीमूतवाहनं सपितृकं सुजयं मत्वा सम्भूय च तस्य राज्यापहरणाय समनह्यन्त । तदवलोक्य जीमूतवाहनः पितरमवादीत्—"तात ! धृतायुधेन त्वया योद्धुं कस्य शक्तिरस्ति ? किन्तु अस्य पापस्य विनाशिनः शरीरस्य कृते बन्धून् हत्वा कोऽकृपणो राज्यमाकाङ्क्षति ? तत् किं नो राज्येन ? अन्यत्र क्वचित् गत्वा वयं धर्ममेव आचरिष्यामः, येन लोकयोरुभयोः सद्गतिः स्यात्। कृपणा एते दायादा राज्यलोलुपा मोदन्ताम्" । इतिवादिनं तं जीमूतकेतुरब्रवीत्,—"पुत्र ! अहं त्वदर्थं राज्यमिच्छामि, त्वञ्चेत् कृपया तत् जहासि, तदा वृद्धस्य मे तेन किम् ?" । इत्थं कृताभ्यनुज्ञेन पित्रा मात्रा च समन्वितः स जीमूतवाहनः राज्यं विहाय मलयाचलमगात्, तत्र स रचिताऽऽश्रमः पितरौ शुश्रूषमाणस्तस्थौ ।

एकदा स इतस्ततो भ्रमन् विश्वावसुनाम्नः सिद्धराजस्य तत्र निवासिनः पुत्रं मित्रावसुं नाम दृष्ट्वा सम्भाष्य च मित्रम् अकरोत्। ततश्चैकदा स जीमूतवाहनः उपवने स्थितं देव्या गौर्या आयतनं दृष्ट्वा प्रविवेश, ददर्श च तत्र उपवीणयन्तीं, सखीजनपरिवृतां, शैलबाला-

---

अतएव पिता सहित उस जीमूतवाहन को जीतना सरल मानकर इकट्ठा होकर उसका राज्य अपहरण करने के उद्देश्य से युद्ध करने के लिये संनद्ध हो गये। यह देखकर जीमूतवाहन ने पिता को कहा—"पिता जी ! आप हथियार धारण किये रहेंगे तो आप से युद्ध करने की किसकी शक्ति है ? किन्तु इस विनाशी तुच्छ शरीर के लिये बन्धुओं को मारकर कौन उदारमन वाला राज्य चाहेगा ? तो हम लोगों को राज्य से क्या प्रयोजन ? अन्यत्र कहीं जाकर हम लोग धर्म का ही आचरण करेंगे, जिससे दोनों लोकों में सद्गति होवे। राज्य के लोभी ये नीच दायादगण प्रसन्न होवें" । ऐसा कहने वाले उस जीमूतवाहन को जीमूतकेतु ने कहा—"पुत्र ! मैं तुम्हारे लिए राज्य चाहता हूँ, यदि तुम दया से युक्त होकर उसे छोड़ रहे हो, तो मुझ वृद्ध को उससे क्या प्रयोजन ?" इस प्रकार आज्ञा देने वाले पिता और माता से युक्त होकर वह जीमूतवाहन राज्य छोड़कर मलय पर्वत पर चला गया। वहाँ वह आश्रम बनाकर माता-पिता की सेवा करते हुए रहने लगा।

एक बार इधर-उधर घूमते हुए उसने वहाँ निवास करने वाले विश्वावसु नामक सिद्धराज के पुत्र मित्रावसु को देखकर स्वागत करके उसको मित्र बना लिया। तब एक बार उस जीमूतवाहन ने वाटिका में स्थित पार्वती देवी का मन्दिर देखकर उसमें प्रवेश किया और वहाँ वीणा बजाकर गीत

"मातः ! न त्वमस्य मे मनोरथस्य भङ्गं कर्त्तुमर्हसि"। आग्रहेण एवं ब्रुवन्तं तं शङ्खचूडः अवादीत्,—"महासत्त्व ! त्वया सत्यं कृपालुता दर्शिता, नाहन्तु त्वच्छरीरेण स्वशरीरं रक्षितुमिच्छामि, रत्नव्ययेन को हि पाषाणं रक्षति ! मादृशैः स्वमात्रानुकम्पिभिर्विश्वम् आपूर्णं, येषां जगदनुकम्प्यं, तादृशा भवादृशा अतिविरलाः। हे साधो ! अहं कलङ्कः शशिबिम्बमिव शङ्खपालकुलं शुचि कलङ्कयितुं न च शक्नोमि" इति तं प्रतिषिध्यैव शङ्खचूडः मातरं पुनर्जगाद,—"अम्ब ! अस्मात् कान्तारात् निवर्त्तस्व, अत्रैतत् नागानामसृग्भिरुक्षितं कृतान्तलीला-पर्य्यन्तरौद्रं बध्यशिलातलं किं न पश्यसि ? अहमिदानीम् अब्धितटं गत्वा गोकर्णाऽऽख्यमीश्वरं नत्वा द्रुतमागच्छामि, यावत् तार्क्ष्यो नागच्छति" इत्युक्त्वा मातरम् आपृच्छ्य च स शङ्खचूडो गोकर्णप्रणा-मार्थमगात्।

"अस्मिंश्चेत् समये तार्क्ष्य आगच्छेत्, तदा मे मनोरथः सिद्धः स्यात्" इति जीमूतवाहनो यावत् मनस्यकरोत्, तावत् आसन्नपक्षी-न्द्रस्य पक्षपवनान्दोलितान् निवारणपरानिव तरून् वीक्ष्य, गरुडाऽऽ-

---

तवाहन ने फिर कहा—"माता जी ! तुम्हें मेरे इस मनोरथ का भङ्ग नहीं करना चाहिये"। आग्रह के साथ ऐसा कहते हुए उसको शङ्खचूड़ ने कहा—"हे महासाहसी ! तुमने तो सत्य ही कृपालुता दिखलाई है, किन्तु मैं तो तुम्हारे शरीर से अपने शरीर की रक्षा नहीं करना चाहता हूँ ; क्योंकि रत्न का व्यय करके कौन पत्थर की रक्षा करता है ? केवल अपने ऊपर दया करने वाले मेरे समान लोगों से संसार भरा हुआ है, किन्तु जिनके लिए संसार ही दयनीय है, उस प्रकार के तुम्हारे समान लोग अत्यन्त विरले ही होते हैं। हे सज्जन ! जैसे कलङ्क चन्द्रमण्डल को कलंकित करता है उस प्रकार मैं शङ्खपालके पवित्र कुल को कलङ्कित नहीं कर सकूँगा"। इस प्रकार उसको रोककर शङ्खचूड़ ने माता को फिर कहा—"अम्ब ! तुम इस दुरूह स्थान से लौट जाओ। क्या यहाँ यह अनेक नागों के शोणित से सींचा हुआ, यमराज के विलास की परिधि होने से भयंकर वध्य शिलातल नहीं देखती हो ? मैं इस समय समुद्र के तट में जाकर गोकर्ण नामक शिवजी को प्रणाम करके शीघ्र आता हूँ, जबतक गरुड़ नहीं आते हैं" यह कहकर और माता को पूछकर वह शंखचूड़ गोकर्ण को प्रणाम करने के लिए चला गया।

जब तक जीमूतवाहन—"यदि इस समय में गरुड़ आ जाते तो मेरा मनोरथ सिद्ध हो जाता" यह मन में सोचता है, तब तक समीप में आये हुए पक्षिराज के पंखों की हवा से हिलाये हुए अतएव निवारण करते हुए के सदृश वृक्षों को देखकर 'गरुड़ के आने का समय हो गया है' यह समझकर

ऽऽराधनार्थं स्थितां, लोचनलावण्यदर्शनेन लज्जितैरिव निश्चलैर्मृगैरा-कर्ण्यमानसङ्गीतवीणारवाम्, अञ्जनेन कृष्णां कर्णमूलं विमथ्नतीं पांडवचमूमिव तारकां बिभ्रतीं, परस्परोपमर्देन मुखेन्दोरिव दर्शनमतृप्तमभिवाञ्छन्तौ उन्मुखौ स्तनौ दधतीं, धातुः सृष्टवतो मुष्टिग्रहेणेव निपीडिते वलीमग्नाङ्गुलीमुद्रे मध्ये क्षाममनोरमां कामपि कन्यकाम्। तया च दृष्टया तन्व्या स जीमूतवाहनः सद्यः दृष्टिमार्गप्रविष्टया मुषितचित्तोऽभूत्। साऽपि तं भूषितोद्यानम् उत्कण्ठाविकारप्रदं कामाङ्गदाहवैराग्यात् वनमाश्रितं मधुमिव दृष्ट्वा अनुरागविवशा तथा विह्वलतां भेजे, यथा सखीनां व्याकुलतामधात्। ततः स जीमूतवाहनस्तस्याः सखीमपृच्छत्,—"भद्रे! तव सख्याः किं धन्यं नाम? को वा वंशोऽनया अलङ्कृतः?"। तदाकर्ण्य सखी प्राब्रवीत्,—"महाभाग! इयं हि नाम्ना मलयवती, मित्रावसोः स्वसा, सिद्धराजस्य दुहिता"। एवमुक्त्वा सा सखी सहृदया तं जीमूतवाहनं, सहाऽऽगतं

---

गाती हुई, सखी लोगों से घिरी हुई, पार्वती जी की उपासना के लिए बैठी हुई, आँख का सौन्दर्य देखने से लज्जित हुए के समान निश्चल हरिणों के द्वारा सुने जाते हुए सङ्गीत तथा वीणा शब्दवाली, काजर से काली पाण्डवों की सेना के समान कर्णमूल का मथन करने वाली (कर्ण की सेना नष्ट करने वाली, दूसरे पक्ष में—कान की जड़ को दबाने वाली) नेत्रतारका धारण करने वाली, आपस में एक दूसरे को धक्का देते हुए अतृप्त होकर मुखरूपी चन्द्रमा का दर्शन चाहते हुए के समान ऊपर मुख किये हुए दोनों स्तनों को धारण करने वाली, बनाने वाले विधाता के मुट्ठी पकड़ने से दबाये हुए तथा बली में धँसी हुई अङ्गुलियों के चिह्नवाले मध्य भाग में कृशता से मनोहारिणी किसी कन्या को देखा। देखी हुई तथा दृष्टि के मार्ग से अन्दर में प्रवेश करने वाली उस सुकुमारी के द्वारा वह जीमूतवाहन उसी समय चुराये गये मनवाला हो गया। वह भी उद्यान की शोभा बढ़ाने वाले तथा उत्कण्ठा का विकार उत्पन्न करने वाले उस जीमूतवाहन को कामदेव का शरीर जल जाने से वैराग्य के कारण वन का आश्रय लिये हुए वसन्त के समान देखकर अनुराग से उस प्रकार की व्याकुलता से युक्त हुई कि जिससे सखियों की भी व्याकुलता उत्पन्न हो गयी। तब उस जीमूतवाहन ने उसकी सखी को पूछा—"हे भली स्त्री! तुम्हारी सखी का कौन सा धन्य नाम है? और कौन सा वंश इसके द्वारा अलंकृत हुआ है?"। यह सुनकर सखी ने उत्तर दिया—"महाशय! इसका नाम मलयवती है, यह मित्रावसु की बहन है तथा सिद्धों के राजा विश्वावसु की पुत्री है"। उस जीमूतवाहन को यह कहकर उस

गमनवेलेयमिति मत्वा जीमूतवाहनः परार्थप्राणदित्सया तां बध्यशिलामारुरोह। आरूढमेव तं महासत्त्वं गरुडः सहसा निपत्य तस्मात् शिलातलात् चञ्च्वा जहार, जवाच्च स्रुतशोणितधारम् उत्खातशिरोरत्नं तं नीत्वा मलयाद्रेः शृङ्गे भक्षयितुमारेभे। "एवमेव प्रतिजन्म मे परार्थो देहः स्यात्, परोपकृतिरहितौ स्वर्गमोक्षौ मा भूताम्" इति तार्क्ष्येण भक्ष्यमाणस्य तस्यानुध्यायतः विद्याधरेन्द्रस्योपरि नभस्तलात् पुष्पवृष्टिः पपात।

अत्रान्तरे रक्तधाराक्तशिरोमणिः तत्पत्न्या मलयवत्याः पुरोऽपतत्। तत् चूडारत्नं दृष्ट्वा सुविह्वला श्वशुरयोरन्तिकस्था सास्रं ताभ्यामदर्शयत्। तौ च दम्पती सूनोस्तं चूडामणिं विलोक्य सहसा "किमेतत्?" इति सम्भ्रान्तौ बभूवतुः। ततः स्वविद्याऽनुभावात् यथावृत्तमवेत्य राजा जीमूतकेतुः राज्ञी च वध्वा सध्वा मलयवत्या सह द्रुतं तत्र यावत् गन्तुं प्रावर्त्तेतां, तावत् स शङ्खचूडस्तं गोकर्णशिवं प्रणम्य तत्राऽऽययौ, ददर्श च तत् शिलातलं रुधिरादार्द्रम्। दृष्ट्वैव "हा हतोऽस्मि महापापः, ध्रुवं तेन महात्मना कृपालुना मत्कृते गरुत्मते

---

जीमूतवाहन दूसरे के लिए प्राण देने की इच्छा से वध्यशिला पर चढ़ गया। आरोहण करते ही उस महासाहसी को गरुड़ एकाएक गिराकर उस शिलातल पर से चोंच से उठाकर और शोणित की धारा बहाते हुए और शिर का रत्न निकाले हुए उसको वेग से ले जाकर मलयाचल के शिखर पर खाना प्रारम्भ किये। "इसी प्रकार प्रति जन्म मेरा शरीर परोपकार के लिए होवे, परोपकार से रहित स्वर्ग और मोक्ष न होवे" यह सोचते हुए तथा गरुड़ के द्वारा खाये जाते हुए उस विद्याधरराज के ऊपर आकाशमण्डल से फूल की वृष्टि गिरने लगी।

इसी बीच में शोणित की धारा से भींगा हुआ वह शिरोमणि उसकी पत्नी मलयवती के सामने गिर गया। सास-श्वशुर के समीप में स्थित उसने उस शिरोरत्न को देखकर विह्वल होकर आँसू बहाती हुई उन दोनों को दिखलाया। वे दोनों दम्पती पुत्र का वह चूडामणि देखकर एकाएक—"यह क्या हुआ?" इस रूप में घबड़ा गये। तब अपनी विद्या के प्रभाव से सब वृत्तान्त समझकर राजा जीमूतकेतु और रानी पुत्रवधू मलयवती के साथ शीघ्र वहाँ जाने के लिये जब तक प्रवृत्त हुए, तब तक वह शंखचूड़ उस गोकर्ण शिव को प्रणाम करके वहाँ आया, और उसने शोणित से भींगे हुए उस वध्यशिला को देखा। देखते ही—"अरे! महापापी मैं मारा गया, निश्चय उस दयालु महात्मा ने मेरे लिये अपनी आत्मा गड़ड़ को दे दी है।

मुनिपुत्रम् अस्य नामान्वयौ पृष्ट्वा तां मलयवतीं स्मितमिताक्षरम् अवादीत्,—"सखि! विद्याधरेन्द्रस्यास्य किमातिथ्यं न करोषि? जगत्पूज्य एषः अतिथिः प्राप्तः"। इति तयोक्ते सा सिद्धराजसुता तूष्णीं लज्जाऽवनताऽऽनना अभूत्। ततः सखी,—"लज्जावतीयं, मत्तोऽर्घ्यो गृह्यताम्" इतिवादिनी तस्मै सार्घ्यां मालामुपानयत्। स च जीमूतवाहनः प्रेमनिर्भरः तां मालामादाय तस्या मलयवत्याः कण्ठे समर्पयत्। साऽपि तिर्य्यक्प्रसृतया स्निग्धया दृशा नीलोत्पलमयीमिव मालां तस्मै प्रत्यार्पयत्। इत्येवम् अन्योन्यकृताशब्दस्वयंवरयोस्तयोः एकां सिद्धराजसुतां काऽपि चेटी समागत्य जगाद,—"राजपुत्रि! जननी त्वां स्मरति, शीघ्रमागच्छ"। तदाकर्ण्य सा कामेषुकीलितामिव सोत्कां दृष्टिं प्रियमुखात् कथञ्चित् आकृष्य कृच्छ्रेण गृहमगात्, जीमूतवाहनोऽपि तद्गताऽऽत्मा स्वमाश्रममयासीत्। अथ सा प्राणेशविरहाऽऽतुरा स्वां जननीं दृष्ट्वा शयनीयं गत्वा आशु तत्र पपात।

अथ सा अन्तर्गतकामाग्निधूमेनेव आविलनेत्रा, सन्तापकथि-

---

सहृदय सखी ने साथ में आये हुए मुनिकुमार से इसके नाम और वंश पूछ कर उस मलयवती को मुस्कुरा कर थोड़े ही शब्दों में कहा—"हे सखी! इस विद्याधरराज का अतिथिसत्कार क्यों नहीं करती हो? संसार के लिये पूजनीय यह अतिथि तुम्हें प्राप्त हुए हैं"। उसके द्वारा यह कहे जाने पर वह सिद्धराजकुमारी लज्जा से शिर झुकाकर चुपचाप रह गयी। तब सखी ने "यह लजा रही है, मुझ से सत्कार ग्रहण करिये" यह कहती हुई अर्घ्य सहित माला का अर्पण किया। और उस जीमूतवाहन ने प्रेम में विभोर होकर उस माला को लेकर उस मलयवती के गले में डाल दिया। उसने भी टेढ़ी गति से फैली हुई स्नेह से भरी दृष्टि से मानो नील कमल की बनी हुई माला बदले में पहना दी। इस प्रकार निःशब्द होकर स्वयंवर किये हुए उन दोनों में से एक सिद्धराजकुमारी को किसी दासी ने आकर कहा—"हे राजकुमारी! माता जी तुम्हारी याद कर रही हैं, जल्दी चलो" यह सुनकर वह कामबाण से गड़ी हुई अपनी उत्कण्ठित दृष्टि को प्रियतम के मुख से किसी प्रकार खींच कर बड़ी कठिनाई से घर गयी। उसी में लगे हुए मनवाला जीमूतवाहन भी अपने आश्रम को गया। इसके बाद वह प्राणेश्वर के विरह से व्याकुल बनी हुई अपनी माता का दर्शन करके बिस्तरे पर जाकर शीघ्र उस पर गिर गयी।

इसके पश्चात् वह अन्तर्गत कामानल के धूएँ से ही मानो मलिन आँख-

आत्मा दत्तः, तदन्वेषामि स महात्मा शत्रुणा क्व नीतः, तञ्चेत् जीवन्तमाप्नुयां तदा अयशःपङ्के न मज्जेयम्" इति उदश्रुर्वदन् स निरन्तरं सान्द्रां पतितां रक्तधारामनुसरन् ययौ।

अत्रान्तरे तं जीमूतवाहनं भक्षयन् गरुडस्तं हृष्टं विलोक्य व्यचिन्तयत्,—"अहो! अपूर्वः कोऽपि अयं महासत्त्वः मया भक्ष्यमाणोऽपि प्रहृष्यति, न तु प्राणैर्वियुज्यते, बिभर्त्ति च लुप्तशेषेऽपि गात्रे रोमाञ्चकञ्चुकम्। किञ्चास्य उपकारिणीव दृष्टिर्मयि प्रसीदति; तदेषः न नागः, कोऽप्येष महापुरुषः, तदेनं पृच्छामि, न पुनर्भक्षयामि"। इति विमृशन्तं तं तार्क्ष्यं जीमूतवाहनः प्राह,—"पक्षिराज! किं निवृत्तोऽसि? अद्यापि मे देहे मांसशोणितं वर्त्तते, न च ते तृप्तिं पश्यामि, तत् पुनर्भुङ्क्ष्व"। एतदतिविचित्रमाकर्ण्य स पक्षिराट् तं पप्रच्छ,—"महात्मन्! नैव त्वं नागः, तत् ब्रूहि, को भवान्?" इति। "नाग एवास्मि, कोऽयं ते प्रश्नः? प्रकृतमनुसर, को हि बालिशः प्रस्तुतार्थविरुद्धमाचरेत्?"।

इत्थं जीमूतवाहने तार्क्ष्यं प्रेरयति, समुपेत्य स शङ्खचूडः दूरात्

---

तो खोजूँ, कि वह महात्मा शत्रु के द्वारा कहाँ ले जाया गया? उसको यदि जीवित ही प्राप्त कर लूँ तो अपयश के पङ्क में न डूबूँगा" आँसू बहाकर यह कहता हुआ वह लगातार सघनरूप से गिरी हुई रक्तधारा का अनुसरण करते हुए गया।

इस बीच में उस जीमूतवाहन को खाता हुआ गरुड़ उसको प्रसन्न हुए देखकर सोचने लगा—"अरे! यह तो कोई अपूर्व ही महासाहसी है, मेरे द्वारा खाये जाने पर भी प्रसन्न होता है, मरता नहीं, और खाये हुए से शेष बचे शरीर में रोमाञ्च धारण करता है। दूसरी बात यह है कि जैसे एक उपकारी के ऊपर लोगों की आँखें प्रसन्न होती हैं उसी प्रकार मेरे ऊपर इसकी दृष्टि प्रसन्न होती है। तो यह नाग नहीं है, यह कोई महापुरुष है। तो इसको पूछता हूँ, खाऊँगा नहीं" इस प्रकार विमर्श करते हुए उस गरुड़ को जीमूतवाहन ने कहा—"हे पक्षिराज! क्यों रुक गये हो? अभी भी मेरे शरीर में मांस और शोणित है, और ऐसा देखता हूँ कि तुम्हारी तृप्ति भी नहीं हुई है, तो और खाओ"। यह अतिविचित्र बात सुनकर उस पक्षिराज ने उसको पूछा—"हे महात्मा! आप नाग नहीं हैं, तो कहिये कि आप कौन हैं?"। "मैं नाग ही हूं, तुम्हारा यह प्रश्न कैसा है? प्रासङ्गिक कार्य करो, कौन मूर्ख प्रासङ्गिक कार्य के विरुद्ध आचरण करेगा?"

इस प्रकार जीमूतवाहन के गरुड़ को प्रेरित करते रहने पर, दूर से आकर

ताङ्गी, अश्रूणि प्रमुञ्चन्ती, सखीभिश्चन्दनैर्लिप्ता, पद्मिनीदलैश्च वीजिता, शयने सख्या अङ्के भूतले च न शर्म लेभे। ततश्च वासरे रक्तया सन्ध्यया सह क्वापि गते, चन्द्रे च हसन्त्याः प्राच्या मुखं समाक्रम्य चुम्बति, सा स्मरेणाऽऽपूर्य्यमाणाऽपि जीवितस्पृहाशून्या दूतीसम्प्रेषणादिकं लज्जया कर्त्तुं नाशकत्, निनाय च कृच्छ्रेण निशाम्। जीमूतवाहनोऽपि तद्वियोगाऽऽर्त्तः शयनस्थोऽपि कामस्य हस्ते पतितः, नूतनोद्भिन्नरागोऽपि प्रोन्मिषत्पाण्डुरकान्तिः, लज्जामूकोऽपि कामजां पीडां वदन् निशामनैषीत्; प्रातश्चोत्थाय नितान्तमुत्सुकः तदेव गौर्य्या मन्दिरमगात्। तत्र तेन सख्या मुनिपुत्रेण पृष्ठतः आगत्य यावदसौ समाश्वास्यते, तावत् मदनानलविह्वला सा मलयवती विरहासहा एकाकिनी गृहान्निर्गत्य गुप्तं प्राणत्यागाय तत्र निर्जने समायात्। सा पादपान्तरितं कान्तमलक्षयन्ती उदश्रुलोचना देवीं गौरीं व्यजिज्ञपत्,—"देवि! तव प्रसादात् अस्मिन् जन्मनि यदि मया जीमूतवाहनः पतिः न लब्धः, तदा अन्यस्मिन्नपि जन्मनि यथा स एव मे पतिर्भूयात्,

---

वाली, सन्ताप से पकते हुए अङ्गों वाली, आँसुओं को बहाती हुई, सखियों के द्वारा चन्दन से लिपी हुई, कमलिनी के दलों से पङ्खा डुलाये जाती हुई बिस्तरे पर, सखी की गोदी में, भूतल पर कहीं भी शान्ति नहीं पाती थी। इसके बाद अनुरक्त सन्ध्या के साथ दिन के कहीं चले जाने पर और हँसती हुई पूरब दिशा का मुह चन्द्रमा के आकर चूम लेने पर वह काम से भरी रहने पर भी जीवन की अभिलाषा से शून्य होकर लज्जा के कारण दूतीसंप्रेषण आदि भी नहीं कर सकी, बड़ी कठिनाई से रात बितायी। जीमूतवाहन भी उसके वियोग से पीड़ित होकर बिछौने पर रहने पर भी काम के हाथ में पड़ा हुआ, उत्पन्न नवीन राग होने पर भी प्रकट हुए पाण्डु (सफेद) कान्तिवाला, लज्जा से मौन रहने पर भी काम से उत्पन्न व्यथा प्रकट करता हुआ रात बिताया। प्रातःकाल उठकर अत्यन्त उत्कण्ठित होकर पार्वती के उसी मन्दिर में गया। वह उस मित्र मुनिकुमार के द्वारा पीछे से आकर जबतक वह समाश्वासित किया जाता है, तब तक वह मलयवती विरह असह्य हो जाने से कामानल से विह्वल होकर अकेली घर से निकल कर गुप्तरूप से प्राणत्याग करने के लिए उस निर्जन स्थान में आयी। वह पेड़ की आड़ में प्रियतम को न देखती हुई आँखों में आँसू भरकर पार्वती देवी का प्रार्थना करने लगी—"हे देवी! यदि इस जन्म में मुझे जीमूतवाहन पति नहीं मिला तो तुम्हारे प्रसाद से दूसरे जन्म में भी जिस प्रकार वही मेरा पति

तमुवाच,—"विनतानन्दन ! मा महापापं साहसञ्च कृथाः, कोऽयं ते भ्रमः ? न ह्येष नागः, नागोऽहमस्मि"। इत्युक्त्वा द्रुतमेत्य तयोर्मध्ये विभ्रान्तं तार्क्ष्यं पुनः शङ्खचूडोऽब्रवीत्,—"गरुत्मन् ! कस्ते भ्रमः ? मे फणां द्वे च जिह्वे न पश्यसि ? किञ्चास्य सौम्यामाकृतिं न पश्यसि ?" इत्थं शङ्खचूडे वदति सा भार्य्या मलयवती पितरौ च सर्वेऽत्र सत्वरम् आययुः। तञ्च विलुप्ताङ्गं पुत्रं दृष्ट्वाऽस्य पितरौ,—"हा पुत्र ! हा जीमूतवाहन ! हा कारुणिक ! हा वत्स ! हा परार्थप्रदत्तजीवित ! हा वैनतेय ! त्वया कथमिदमविमृश्य समाचरितम् ?" इति विलपन्तौ भृशं रुरुदतुः। तत् श्रुत्वा तार्क्ष्यो भृशमनुतप्तो व्यचिन्तयत्,—"हा ! कथं बोधिसत्त्वांश-सम्भवो मया मोहात् भक्षितः ? सोऽयं जीमूतवाहनः परार्थप्राणदाता, यस्य कृत्स्नेऽत्र जगति कीर्त्तिघोषणा भ्रमति !! तदस्मिन् मृते पापस्य मे अग्निप्रवेशनं युक्तम्, अधर्मविषवृक्षस्य स्वादु फलं किं पच्यते ?" इत्येवं चिन्ताकुले तार्क्ष्ये स जीमूतवाहनः बन्धून् समागतान् दृष्ट्वा निपत्य व्रणव्यथया पञ्चत्वमवाप।

---

उस शंखचूड़ ने कहा—"हे विनतानन्दन ! साहस और महापाप मत करो, यह कौन तुम्हारा भ्रम है? यह नाग नहीं है, नाग तो मैं हूँ"। यह कहकर शीघ्र उन दोनों के बीच में जाकर भ्रम में पड़े हुए गरुड़ को शंखचूड़ ने फिर कहा—"हे गरुड़ ! कौन सा तुम्हारा भ्रम है ? मेरी फणा और दो जीभ नहीं देखते हो ? दूसरी बात इसकी सुन्दर आकृति नहीं देखते हो ?" इस प्रकार शंखचूड़ के कहते रहने पर वह पत्नी मलयवती और माता-पिता सभी यहाँ शीघ्रता से आ गये। खाये हुए शरीरवाले उस पुत्र को देखकर उसके माता-पिता—"हा पुत्र ! हा जीमूतवाहन ! हा दयालु ! हा वत्स !। हा गरुड़ ! तुमने बिना विचारे हुए यह क्यों किया ?" इस प्रकार विलाप करते हुए जोरों से रोने लगे। यह सुनकर अत्यन्त पश्चात्ताप करते हुए गरुड़ सोचने लगा—"हाय ! क्या बोधिसत्त्व के अंश से उत्पन्न यह भ्रम से मेरे द्वारा खाया गया ? दूसरे के लिए प्राण देनेवाला यह वही जीमूतवाहन है, जिसकी इस सम्पूर्ण संसार में कीर्ति की घोषणा नाचती है, तो इसके मरने पर मुझ पापी का तो अग्नि में प्रवेश करना उचित है। क्या अधर्म रूपी विषवृक्ष का स्वादिष्ट फल पकता है ?" इस प्रकार गरुड़ के चिन्ता से व्याकुल हो जाने पर बन्धुओं को आये हुए देखकर वह जीमूतवाहन गिरकर घाव की व्यथा से मर गया।

तथा प्रसादः क्रियताम्”। इत्युक्त्वा सा स्वोत्तरीयेण तत्क्षणम् अशोकतरुशाखायां, तस्या एव देव्या अग्रतः “हा नाथ ! जीमूतवाहन ! विश्वविख्यातकरुणेनापि त्वया कथमस्मि न परित्राता ?” इत्युक्त्वा यावत् गले पाशं नियच्छति, तावत् इयमशरीरिणी भारती अन्तरीक्षात् समुदभूत्,—“पुत्रि ! मा साहसं कार्षीः, भाविविद्याधरचक्रवर्त्ती जीतमूतवाहनस्ते पतिर्भविष्यति”। इति दैवीवाचमाकर्ण्य सवयस्यः जीमूतवाहनः हृष्टां तां प्रियामुपाजगाम। “एष ते देव्या वरः प्रदत्तः सत्यमेव” इति तन्मित्रे मुनिपुत्रे तां बालां जल्पति, जीमूतवाहनस्तत्तत् पेशलं ब्रुवन् स्वहस्तेनैव तस्याः कण्ठात् पाशममोचयत्।

ततोऽकस्मात् तत्र पुष्पाणि चिन्वती काऽपि सखी तं व्यापारमवलोकयन्ती हृष्टा समेत्य तां सव्रीडया दृशा भुवं लिखन्तीं जगाद,—“सखि ! दिष्ट्या वर्द्धसे अभीष्टसिद्धितः। अद्यैव महाराजो विश्वावसुस्ते पिता मम सन्निधौ कुमारेण मित्रावसुना विज्ञप्तः—‘तात ! जगन्मान्यः कल्पतरुप्रदः योऽयं विद्याधरेन्द्रतनयो जीमूतवाहन इहाऽऽगतः, सः अतिथित्वेन नः पूज्यः तादृशश्चान्यो वरः न दृश्यते, तस्मा-

---

होवे तुम उस प्रकार की कृपा करना”। यह कहकर वह अपने दुपट्टे से उस समय अशोक वृक्ष की डाली में उसी देवी के सामने “हा नाथ ! जीमूतवाहन ! विश्वविख्यात दयालु होने पर भी क्यों तुम ने मेरी रक्षा नहीं की ?” यह कहकर जबतक गले में फाँसी डालती है तबतक यह अशरीरिणी वाणी आकाश से उत्पन्न हुई—“हे पुत्री ! साहस मत करो, विद्याधरों का भावी चक्रवर्ती राजा जीमूतवाहन तुम्हारा पति होगा” यह दैवी वाणी सुनकर मित्र सहित जीमूतवाहन उस प्रसन्न प्रियतमा के पास आ गया। “देवी का दिया हुआ सत्य ही यह तुम्हारा वर है” यह उसके मित्र मुनिकुमार के उस बालिका को कहने पर जीमूतवाहन ने वह मधुर वचन कहते हुए अपने हाथ से उसके गले से पाश खोल दिया।

तब अकस्मात् वहाँ फूल चुगती हुई तथा उन सभी क्रियाओं को देखती-देखती प्रसन्न हुई किसी सखी ने आकर लज्जा से भरी आँखों से भूमि को खोदनेवाली उस मलयवती को कहा—“भाग्य के द्वारा मनोरथ सिद्ध होने से तुम्हारी वृद्धि हो रही है। आज ही तुम्हारे पिता महाराज विश्वावसु मेरे सामने ही राजकुमार मित्रावसु के द्वारा निवेदन किये गये हैं कि—‘पिता जी ! संसार वालों से सम्मानित, कल्पवृक्ष का दान करने वाला, विद्याधरराज का पुत्र जो कि यह जीमूतवाहन यहाँ आया है, वह क्या अतिथि रूप में

पुरात् विलासिन्यः,—"भद्र ! उत्तिष्ठ, एहि, स्नाहि, भुङ्क्ष्व, भज नः स्वामिनीम्" इति उक्त्वा अभ्यन्तरं नीत्वा स्नापयित्वा अनुलिप्य परिधाप्य च अन्यत् वासमन्दिरं निन्युः। तत्र च प्रविश्य स युवा एकां सर्वाङ्गसुन्दरीं धात्रा कौतुकादिव निर्मितां कामपि वरारोहां ददर्श ; तया च समुत्थाय अर्द्धासनोपवेशितः दिव्यमाहारं विविधानि फलानि भुक्त्वा गृहीतताम्बूलः पर्य्यङ्कशय्यायां तत्सम्भोगसुखेन निशाम् अनयत्। प्रातः प्रबुद्धश्च तत्र तमेव शिवाऽऽलयं ददर्श, न तां दिव्याङ्गनां, नापि पुरं तत् तथाविधपरिच्छदयुतम्। ततः स समुद्विग्नो निर्गत्य मठिकायां स्मिताननं पृष्टरात्रिवृत्तान्तं तं तापसं व्यजिज्ञपत्,—"भगवन् ! त्वत्प्रसादात् रजन्यामहं सुखमुषितः, किन्तु तया दिव्याङ्गनया विना मे प्राणा यास्यन्ति" इति। तदाकर्ण्य स तापसो हसन्नब्रवीत्,—"इहैव तिष्ठ, पुनर्नक्तं तथैव ते सुखं भविष्यति"।

इति तेन व्रतिना अभिहिते स चन्द्रस्वामी तस्य तापसस्य प्रसादात् प्रतिरूपं तान् तान् भोगान् अभुङ्क्त! शनैश्च तस्य तं विद्याप्रभावं विदित्वा विधिचोदितः स चन्द्रस्वामी तं तापसं प्रसाद्य एकदा

---

स्वामिनी का भोग करो" यह कहकर अन्दर ले जाकर स्नान कराकर सुगंधित अनुलेपन करके सुन्दर वस्त्र पहना कर दूसरे निवास-गृह में ले गयीं। वहाँ प्रवेश करके उस युवक ने विधाता के द्वारा मानों कौतुकवश बनायी हुई किसी एक सर्वाङ्ग-सुन्दरी युवती को देखा। उसके द्वारा उठकर आधे आसन पर बैठाया हुआ सुन्दर भोज्य पदार्थ तथा अनेक प्रकार के फल खाकर पान ग्रहण करके पलङ्ग की शय्या पर उसके सम्भोग के सुख से उस युवक ने रात बितायी। और प्रातःकाल जाग कर उसने वहाँ वही शिवालय देखा न तो उस दिव्य सुन्दरी को और न उस प्रकार की सामग्रियों से भरे हुए उस पुर को देखा। तब व्याकुल होकर उसने निकल कर कुटिया में मुस्कुराते हुए तथा रात्रि का वृत्तान्त पूछते हुए उस तपस्वी को निवेदन किया—"महाशय ! तुम्हारे प्रभाव से रात में मैंने सुख से निवास किया, किन्तु उस दिव्य सुन्दरी के बिना मेरे प्राण तो निकल जायँगे। यह सुनकर हँसते हुए उस तपस्वी ने कहा कि—"यहीं रहो, फिर रात में उसी प्रकार तुमको सुख मिलेगा"।

इस प्रकार उस साधू के द्वारा कहे जाने पर वह चन्द्रस्वामी उस तपस्वी के प्रसाद से प्रतिरात्रि उन-उन उपभोगों का सम्भोग करने लगा। धीरे-धीरे उसके उस विद्या-प्रभाव को समझकर विधाता से प्रेरित होकर उस चन्द्रस्वामीने

इमं शिशुं राज्ञः सूर्यप्रभस्य द्वारि नीत्वा मञ्चस्थं कृत्वा त्यज, एवं ते क्षेमं भविता" इति समादिष्टा हरेण सा वणिक्सुता तन्माता च प्रबुध्य अन्योन्यमूचतुः, तत्यजतुश्च भगवत्प्रत्ययात् तं राजद्वारं नीत्वा बालकम्। तावच्च तमपि सूर्य्यप्रभं पुत्रचिन्तासमुत्सुकं नृपं स्वप्ने भगवान् वृषध्वजस्तथैव समादिशत्,—"राजन्! उत्तिष्ठ, सिंहद्वारि सकाञ्चनो बालकः तिष्ठति केनापि स्थापितोऽतिसुलक्षणः मञ्चस्थितः, तं द्रुतं गृहाण"। इति शम्भुनाऽऽदिष्टः स राजा प्रातः प्रबुध्य तथैव द्वाःस्थैः प्रविश्य विज्ञप्तः स्वयं निर्ययौ। दृष्ट्वा सिंहद्वारे सहेमचयं मञ्चस्थं शिशुं रेखाच्छत्रध्वजाङ्कपाणिपादं शुभाऽऽकृतिं,—"शम्भुना दत्ताऽयं समुचितः, पुत्रः" इति सानन्दं ब्रुवन्, स्वयं बाहुभ्यां गृहीत्वा अन्तःपुरं विवेश; महोत्सवं कृत्वा च द्वादशेऽहनि पुत्रं नाम्ना चन्द्रप्रभमकरोत्। इत्थं स राजपुत्रश्चन्द्रप्रभः क्रमेण वपुषेव गुणौघेनापि आश्रितानन्ददायिना सर्वान् समनुरञ्जयन्, शनैर्युवा सन् शौर्य्यौदार्य्यश्रुतादिभिरावर्जितप्रकृतिमण्डलः पृथिवीभारवहनक्षमः समजायत।

---

"एक हजार सोने की अशर्फियों के साथ इस बच्चे को सूर्यप्रभ राजा के द्वार पर लेजाकर मचान पर रखकर छोड़ दो; इस प्रकार तुम्हारा कल्याण होगा" इस प्रकार शङ्कर जी के द्वारा आदेश दी हुई वह वणिक्पुत्री और उसकी माता उठकर एक दूसरी को सपने का वृत्तान्त कहने लगी तथा उन दोनों ने शिवजी के विश्वास से उस बालक को राजा के द्वार पर ले जाकर छोड़ दिया। उसी समय में पुत्र की चिन्ता से उत्कण्ठित उस सूर्यप्रभ राजा को भी सपने में भगवान् शङ्कर जी ने उसी प्रकार आदेश दिया—"महाराज! उठो, सिंहद्वार पर किसी के द्वारा मचान पर सुवर्ण-सहित रक्खा हुआ अत्यन्त सुलक्षण बालक है, उसे शीघ्र ले लो" यह शङ्कर जी के द्वारा आदेश दिया हुआ तथा प्रातःकाल उठकर द्वारपालों के द्वारा प्रवेश करके उसी प्रकार निवेदन किया हुआ वह राजा स्वयं निकल पड़ा। और सिंहद्वार पर सुवर्ण-समूह से युक्त, हाथ और पैर में छत्र-ध्वज आदि रेखा से चिह्नित, सुन्दर-स्वरूप वाले बच्चे को मचान पर पड़े हुए देखकर—"शङ्कर जी का दिया हुआ यह सुयोग्य पुत्र है" यह आनन्द के साथ कहता हुआ वह स्वयं दोनों भुजाओं से उठाकर रनिवास में प्रवेश किया। फिर महान् उत्सव करके बारहवें दिन पुत्र का नामकरण करते हुए 'चन्द्रप्रभ' नाम रक्खा। इस प्रकार वह राजकुमार चन्द्रप्रभ क्रमशः शरीर के समान ही आश्रितों के आनन्द देनेवाले गुणसमूह से भी सबों को आनन्दित करते हुए धीरे-धीरे युवक होकर वीरता, उदारता, शास्त्राध्ययन आदि गुणों से प्रजामण्डल को आकृष्ट करते हुए पृथिवी का भार वहन करने के योग्य हो गया।

ययाचे,—"भगवन्! यदि सत्यं शरणागते मयि ते कृपा जाता, तदेतां विद्यां मे देहि, यस्या अयम् ईदृशः प्रभावः" इति निर्बन्धात् प्रार्थयमानं तं स तापसः प्रत्यवादीत्,—"भद्र! एषा विद्या तव असाध्या, असौ अन्तर्जले साध्यते, तत्र चैषा जपतः साधकस्य विमोहाय तथा मायाजालं सृजति, यथा स सिद्धिं न लभेत स हि जापकस्तत्र पुनर्जातं बालकमात्मानम् ईक्षते, ततो युवानं कृतदारं जातात्मजम्; ततः सुहृदयं मे, शत्रुरयं मम इति मिथ्या प्रपश्यति; न च इदं जन्म, नापि विद्यासाधने प्रवृत्तिं स्मरति। यस्तु चतुर्विंशतिवर्षं तथा जपन्, जन्म स्वं स्मृत्वा, तत्तत् मायाविजृम्भितं विदित्वा तद्वशो वह्निप्रवेशं कुरुते, स एव परमार्थतो जलोत्तीर्णः सिद्धविद्यां पश्यति, एषा च सुशिष्यस्यैव सिध्यति, अस्थानार्पणात् गुरोरपि विनश्यति। मत्सिद्धैयव ते फले सिद्धे किं ते अमुना आग्रहेण? मम सिद्धिहानौ एषा तदैव विनङ्क्ष्यति"। एवं तपस्विनोक्तेऽपि स चन्द्रस्वामी,—'शक्ष्यामि सर्वं, मा तावदत्र

---

उस तपस्वीको प्रसन्न करकेएकबार प्रार्थना की–"महाशय! यदि सत्य ही मुझ शरणागत के ऊपर आपकी कृपा हुई है तो यह विद्या मुझे दीजिये, जिसका यह इस प्रकार का प्रभाव है"। आग्रह के साथ यह प्रार्थना करते हुए उसको उस तपस्वी ने जवाब दिया—"हे भले आदमी! यह विद्या तुम्हारे लिये असाध्य है, यह तो पानी के अन्दर सिद्ध की जाती है। और वहाँ यह जप करनेवाले साधक को धोखा देने के लिये उस प्रकार माया-जाल फैलाती है, जिससे वह सिद्धि नहीं प्राप्त कर सके। वह मन्त्र जपनेवाला वहाँ अपने को फिर से उत्पन्न हुए बालक के रूप में देखता है। फिर क्रमशः अपने को युवक तथा पत्नी ग्रहण किये हुए और पुत्र उत्पन्न किये हुए देखता है। इसके बाद यह मेरा मित्र है, यह मेरा शत्रु है, इस रूप में झूठ ही समझने लगता है। न तो यह जन्म और न विद्यासाधना की अपनी प्रवृत्ति ही उसे याद रहती है। जो चौबीस वर्षों तक उस प्रकार जप करता हुआ अपने वास्तविक जन्म का स्मरण करके 'वह वह माया का विकास है' यह समझ कर उसके वश में रहते हुए भी अग्नि में प्रवेश करता है, वही पानी से बाहर निकल कर वास्तविक रूप में सिद्ध हुई विद्या को देखता है। यह विद्या योग्य शिष्य को ही सिद्ध होती है, अयोग्य शिष्य को देने से गुरु की विद्या नष्ट हो जाती है। मेरी सिद्धि से ही तो तुम्हें सिद्धरूप में फल मिल रहा है तो फिर इस आग्रह से तुम्हारा क्या लाभ है? तुम्हारी यह उपभोग-सामग्री तभी नष्ट होगी जब कि मेरी सिद्धि नष्ट हो जाय"। ऐसा उस तपस्वी के द्वारा कहे जाने पर उस चन्द्रस्वामी ने—"मैं सब कुछ कर सकूँगा,

अथ सूर्य्यप्रभः पिता तादृशं तं दृष्ट्वा राज्ये अभिषिच्यैव वृद्धो वाराणसीं ययौ। ततश्च तस्मिन् नयशालिनि तनये पृथ्वीं शासति स राजा तत्र वाराणस्यां तीव्रतपसा तनुमजहात्। ततः स धार्मिको नरपतिः चन्द्रप्रभः पितृनिधनं श्रुत्वा अनुशोच्य कृतक्रियः सर्वान् सचिवान् अभ्यधात्,—"तातस्य केनापि नाहमनृणो भवितुं क्षमः, तथाऽपि स्वहस्तेन अस्य एकां निष्कृतिं ददामि, गङ्गायामस्य अस्थीनि नीत्वा क्षिपामि, गयाञ्च गत्वा सर्वपितृभ्यः पिण्डं ददामि, एतत्प्रसङ्गेन च मे तीर्थयात्रा भविष्यति"। इत्युक्तवन्तं राजानं मन्त्रिणो व्यजिज्ञपन्,—"देव! न तावदिदं ते कर्त्तुं युक्तं, राज्यं हि बहुच्छिद्रं, पित्रुपक्रिया च ते पुरोहितेनापि सम्पद्यते। स्वधर्मपालनात् तीर्थयात्रा न ते साधीयसी, बहुपापं क्व पान्थत्वम्? नित्यगुप्तः पार्थिवश्च क्व?"। इति मन्त्रिणां वचः समाकर्ण्य चन्द्रप्रभोऽब्रवीत्,—"अलं विकल्पेन, पित्रर्थे अवश्यमेव मया गन्तव्यम्; तीर्थानि च मया गन्तव्यानि यावत् अहं शक्नोमि, पश्चात् क्षणविनश्वरे शरीरे को वेत्ति किं भावि? यावद-

---

इसके बाद पिता सूर्यप्रभ अपने पुत्र चन्द्रप्रभ को उस प्रकार योग्य देख कर उसको राज्य पर अभिषिक्त करके वृद्ध होने के कारण वाराणसी चले गये। तब उस न्यायशील पुत्र के पृथ्वी का शासन करते रहने पर उस राजा ने वहाँ वाराणसी में कठोर तपस्या के द्वारा शरीर त्याग किया। इसके बाद उस धार्मिक राजा चन्द्रप्रभ ने पिता की मृत्यु सुनकर शोक करके श्राद्धादि कृत्य सम्पूर्ण करके सभी मन्त्रियों को कहा—"किसी भी प्रकार से मैं पिता जी से उऋण नहीं हो सकता हूँ, उथापि अपने हाथ से इनका एक निस्तार करूँगा, इनकी अस्थियाँ गङ्गाजी में ले जाकर डाल दूंगा, गया जाकर सभी पितरों को पिण्ड दूँगा, इस प्रसङ्ग से मेरी तीर्थ-यात्रा होगी।" ऐसा कहते हुए राजा को मन्त्रियों ने निवेदन किया—"महाराज! आपको तो यह करना उचित नहीं है, क्योंकि राज्य बहुत उपद्रव की वस्तु है, तुम्हारे पिता का उपकार तो पुरोहित के द्वारा भी हो सकता है। अपने धर्मपालन से तुम्हारी तीर्थयात्रा अच्छी चीज नहीं है। हमेशा खतरे से भरा हुआ कहाँ तो पथिक होना? और हमेशा सुरक्षित रहनेवाला कहाँ राजा?"। मंत्रियों का यह वचन सुनकर चन्द्रप्रभ ने कहा—"विरुद्ध कल्पना करना व्यर्थ है, पिता के लिए मुझे अवश्य जाना है, तीर्थों में मुझे जाना है, जितना मैं जा सकूँगा। शरीर तो क्षण विनश्वर है, कौन जानता है पश्चात् क्या भावी है? जब तक मैं आता हूँ, तब तक आप लोगों को राज्य की रक्षा करनी है।"

हमागच्छामि तावत् युष्माभिः राज्यं रक्ष्यम्" इति। इत्थं राज्ञो निश्चयं श्रुत्वा मन्त्रिणस्तूष्णीमासन्। ततः स भूपतिः सर्वं प्रयाणसञ्चारं सज्जं चक्रे।

अथ शुभेऽहनि स राजा स्नातो हुताग्निः ब्राह्मणानर्च्चयित्वा, सज्जितं रथमास्थाय प्रयतः शान्तवेगः सामन्तान् राजपुत्रान् पौरजानपदानपि आसीमान्तानुयायिनः सन्निवर्त्य सम्भाष्य च, ब्राह्मणैर्वाहनारूढ़ैः पुरोहितेन च सह प्रतस्थे। गच्छंश्च पथि विचित्रदेशभाषादिविलोकनविनोदितः क्रमात् बहून् देशान् क्रामन् जाह्नवीं प्राप, ददर्श च तां जलकल्लोलपङ्क्तिभिः जीवानां त्रिदिवारोहसोपानपद्धतिं सृजतीमिव, हिमवत्प्रभवां गौरीं प्रतीर्ष्यया शम्भोः क्रीडया कृतकेशग्रहां देवर्षिगणवन्दिताम्। ततश्च राजा रथादवरुह्य यथाविधि कृतस्नानविधिः पितुः सूर्य्यप्रभस्य अस्थीनि गङ्गाऽम्भसि निचिक्षेप। तत्र च यथाविधि दानानि दत्त्वा कृतश्राद्धो रथमारुह्य प्रस्थितः क्रमेण प्रयागं तीर्थमवाप। तत्र चोपोष्य कृतस्नानः श्राद्धदानादिकञ्च यथाविधि कृत्वा

---

इस प्रकार राजा का निश्चय सुनकर मन्त्री लोग चुप हो गये। इसके बाद उस राजा ने यात्रा का सब सामान सुसज्जित किया।

इसके बाद अच्छे दिन में उस राजा ने स्नान करके अग्नि में होम करके ब्राह्मणों का सम्मान करके सुसज्जित रथ पर चढ़कर पवित्र तथा जितेन्द्रिय होकर सीमा तक चारों तरफ से अनुगमन करने वाले क्षत्रियों को पुरवासी जनों को भी उचित संभाषण के साथ लौटा कर वाहनों पर चढ़े हुए ब्राह्मणों और पुरोहित के साथ प्रस्थान किया। रास्ते में जाते हुए वह राजा विचित्र विचित्र देश-भाषा आदि के देखने से मन बहलाते हुए क्रमशः बहुतों देशों को पार करते हुए गङ्गा जी के पास पहुँचे। और उसने लहरों की कतार से जीवों के लिए स्वर्ग आरोहण करने की सीढ़ियों की कतार निर्माण करती हुई के समान हिमालय से उत्पन्न होने वाली, पार्वती के प्रति ईर्ष्या से खेलवाड़ में ही शंकर जी का बाल ग्रहण करनेवाली देवता और ऋषिगणों से वन्दित उस गङ्गा जी को देखा। इसके बाद उस राजा ने रथ से उतर कर विधिवत् स्नानक्रिया करके अपने पिता सूर्यप्रभ की अस्थियों को गङ्गा के जल में प्रवाहित कर दिया। फिर वहाँ उचित विधि से दान देकर श्राद्ध करके रथ पर चढ़कर प्रस्थान करके क्रमशः उस राजा ने प्रयाग तीर्थ को प्राप्त किया। वहाँ उपवास तथा स्नान करके उचित विधि से श्राद्ध दान आदि करके

स्थलम् अश्वत्थपादपं दृष्ट्वा "इह रात्रिं वसामि" इति मनसि अकरोत्। ततस्तुरगादवतीर्य्य तस्मै वाजिने तृणोदकं दत्त्वा वाप्यास्तस्याः सलिलानि पीत्वा प्रियया सह विशश्राम। तत्कालञ्च शशलाञ्छनः सरागः तिमिरांशुकहारी समाक्रम्य प्राच्या मुखं चुचुम्बे। चन्द्रकिरणैः समाश्लिष्य प्रसाधिता वीतमानावकाशाः शेषाश्च दिशो विरेजुः। अत्रान्तरे लतागुल्मविवरप्रसृतैरैन्दवैः रत्नदीपाभैः करैस्तरुमूले अवभासिते स राजा तामिन्दीवरप्रभां नवसङ्गमरसोल्लासामाश्लिष्य सुरतोत्सवं सिषेवे, विस्रंसयामास च तस्यास्त्रपामिव नीवीं, खण्डयामास च दशनैस्तस्या मुग्धभावमिवाधरं, रचयामास च यौवनद्विपकुम्भयोः तस्याः कुचयोः सद्रत्ननवनक्षत्रमाला इव नखक्षतानि, चुचुम्ब च मुहुः सर्वतो लावण्यामृतनिस्यन्दमिव पिबन् मुखं कपोलौ नयने च। इत्थं तया सह निधुवनक्रीडया तत्र तां निशां क्षणमिवानयत्।

---

रूपी नीले वस्त्र से शरीर ढकनेवाली रात्रिरूपी अभिसारिका दिखाई पड़ने लगी। उस समय राजा ने जलाशय के तीर में रहनेवाले, अपनी शाखाओं के पल्लवों के द्वारा घासों से हरी भूमि को आच्छादित करनेवाले पिप्पल वृक्ष को देखकर "यहाँ रात्रि भर रहूँ।" ऐसा मन में विचार किया। इसके बाद घोड़े से उतर कर उस घोड़े को घास और पानी देकर उस सरोवर से पानी पीकर प्रियतमा के साथ वह विश्राम करने लगा। उसी समय चन्द्रमा अनुराग ( लालिमा ) से युक्त होकर अन्धकाररूपी वस्त्र हटाते हुए आकर पूर्व दिशा का मुख चूमने लगे। चन्द्रमा की किरणों के द्वारा आलिङ्गन कर के सजायी हुई, दैर्घ्यप्रमाण तथा अन्दर के अवकाशों से हीन होकर (अभिमान के अवसर से विगत होकर) सभी दिशाएँ शोभा पाने लगीं। इस बीच में ऊपर फैली हुई लता के झुरमुट के विवरों से फैली रत्न-दीपक के समान चद्रमा की किरणों से पेड़ के नीचे प्रकाशित हो जाने पर वह राजा नवीन सङ्गम के आनन्द से उल्लसित उस इन्दीवरप्रभा का आलिङ्गन कर के सम्भोगोत्सव का सेवन करने लगा। उसकी लज्जा के समान उसके कटि-वस्त्र-बन्धन को ढीला कर दिया और भोलेपन के समान दाँतों से उसके ओठों का खण्डन किया तथा युवावस्थारूपी हाथी के कुम्भ ( मस्तक ) के समान उसके दोनो स्तनों के ऊपर अच्छे रत्नों की नवीन नक्षत्रमाला ( सत्ता-इस रत्नों की माला ) के समान नखक्षतों से सजाया। सब जगह से लावण्य-रूपी अमृत रस पीते हुए मुख, दोनों गाल, दोनों आखों का बार बार चुम्बन किया। इस प्रकार उसके साथ संभोग-क्रीड़ा के द्वारा वहाँ उस रात को उसने एक क्षण के समान बिताया।

वाराणसीं जगाम। तस्याञ्च त्रीणि दिनानि उपोष्य वृषभध्वजमच्चर्-यित्वा गयां प्रति प्रययौ।

क्रमेण नानाविधानि वनानि गिरीन् नदीश्चातिक्रम्य गयाशिरः प्राप। तत्र विधिवत् भूरिदक्षिणं श्राद्धं विधाय गयाकूपे पिण्डं ददतोऽस्य पिण्डमादातुं त्रयो मानुषपाणयः समुत्तस्थुः। तदवलोक्य स राजा विभ्रान्तः,—"किमेतत् ?" इति विमूढमतिः "कस्मिन् पाणौ पिण्डं क्षिपामि" इति निजान् ब्राह्मणानुवाच। "देव ! अयं तावदेकश्चौरस्य पाणिर्निश्चितं, यस्मिन् लोहमयः शङ्कुर्दृश्यते, द्वितीयश्च करोऽयं ब्राह्मणस्य, यतो धृतपवित्रो दृश्यते, तृतीयश्चायं पाणिर्महाराजस्य साङ्गुलीयः सुलक्षणो विभाव्यते; तन्न विद्मो वयं, क्वायं पिण्डो निक्षेप्यः, किमिदं भवेत्" इति। इति तैर्द्विजैरुक्तो राजा निश्चयं कर्त्तुं नाशकत्"।

इति विचित्रां कथामाख्याय वेतालः स्कन्धस्थित एव पप्रच्छ,—"राजन्। कस्मिन् हस्ते स पिण्डो देय इति संशयं छिन्धि, स्मर्य्यतां त्वया प्राक्तनः समयः" इति। राजाऽब्रवीत्,—"वेताल ! यतोऽसौ

---

काशी नगरी में पहुँच गया। वहाँ भी तीन दिन उपवास करके शंकर जी की पूजा करके गया के प्रति प्रस्थान किया।

क्रमशः अनेक प्रकार के जंगल पहाड़ और नदियों को पार करके वह राजा गयाशिर तीर्थ में पहुँचा। वहाँ विधानपूर्वक पर्याप्त दक्षिणा देते हुए श्राद्ध करके गया-कूप में पिण्ड देने के समय इसका पिण्ड लेने के लिए मनुष्य के तीन हाथ उपस्थित हुए। यह देखकर भ्रम में पड़े हुए उस राजा ने 'यह कैसी बात है ?" इस रूप में हतबुद्धि होकर "किस हाथ में पिंड फेकूँ ?" यह अपने ब्राह्मणों को पूछा। "महाराजा ! निश्चित ही यह चोर का एक हाथ है, जिसमें सेंध खोदने वाला लोहे का हथियार है, दूसरा यह हाथ ब्राह्मण का है, क्योंकि पवित्री धारण किये हुए दिखाई पड़ता है, तीसरा यह हाथ महाराज का है, अंगूठी पहने हुए सुन्दर लक्षणों से युक्त मालूम होता है। किन्तु हम लोग यह नहीं जानते हैं कि यह पिण्ड किस में डाला जाय ? यह क्या है ?"। यह उन ब्राह्मणों के द्वारा कहे जाने पर राजा कुछ निश्चय नहीं कर सके"।

यह विचित्र कथा कहकर कन्धे पर से ही वेताल ने पूछा—"महाराज ! 'किस हाथ में वह पिंड दिया' यह सन्देह दूर करो, पहले का किया हुआ नियम याद करो"। राजा ने कहा—"वेताल ! क्योंकि यह चन्द्रप्रभ राजा

अथ प्रातः समुत्थाय कृतसान्ध्यविधिः स्वसैन्यानुसन्धानाय तया कान्तया सह प्रयातुमुत्सुकोऽभवत्। तावच्च रजन्यां विलुप्तकमलिनी-शोभं भियेव अस्ताचलकुहरप्रलीनं ध्वस्ततेजसं निशापतिं हन्तुकाम इव क्रोधादाताम्रतररोचिषि प्रसारितकरैरुत्क्षिप्तचन्द्रमण्डले विवस्वति, अकस्मात् विद्युत्पिशङ्गजटः कज्जलश्यामलः कालमेघ इव कश्चित् अन्त्रमालाकृतोत्तंसः केशयज्ञोपवीती ब्रह्मराक्षसः नरशिरोमांसं खादन् कपालेन शोणितं पिबंश्च समाजगाम। सः अट्टहासं विमुच्य क्रुधा अग्निं वमन्निव दंष्ट्राकरालो राजानं तं निर्भत्सयन्नब्रवीत्,—'पाप! ज्वालामुखं नाम मां ब्रह्मराक्षसं विद्धि, एष चाश्वत्थो मे निवासः देवैरपि न लङ्घ्यते, सोऽयं त्वया स्त्रिया सह समाक्रम्य परिभुक्तः, तद्-विनयमिदानीं भुङ्क्ष्व, दुराचार! एषोऽहं कामोपहतचेतसः ते हृदय-मुत्पाट्य भोक्ष्ये, शोणितञ्च पास्यामि"। तदाकर्ण्य तञ्च घोरं राक्षस-मवध्यमवेद्य, दृष्ट्वा च कान्तां भयविह्वलां, भयात् राजा सविनयमवा-दीत्,—"अजानता मया ते अपराद्धं, तत् क्षमस्व। तवाऽऽश्रमेऽहम-

---

इसके बाद प्रातः काल उठकर सन्ध्या-वन्दन आदि करके अपनी सेना का अनुसन्धान करने के लिये उस प्रियतमा के साथ चलने के लिये वह राजा उद्यत हुआ। तब तक मानो क्रोध के कारण अत्यन्त लाल प्रभावाले फैलायी हुई किरणों से चन्द्रमण्डल के दूर हटानेवाले सूर्य के रात में कमलिनी की शोभा नष्ट करने के कारण अस्ताचल की गुफा में छिपे हुए नष्ट तेजवाले चन्द्रमा के मानो मारने के इच्छुक होने पर एकाएक बिजली के समान पीली जटावाला, काले बादल के समान तथा काजर के समान काले रङ्गवाला, अतड़ी के समूह को कानका भूषण बनानेवाला, केश का यज्ञोपवीत पहने हुए, मनुष्य के शिर का मांस खाता हुआ, नरकपाल से शोणित पीता हुआ कोई ब्रह्मराक्षस आया। भयङ्कर दाँतवाले उसने जोरों से चिल्लाकर क्रोध से आग उगलने हुए की तरह राजा को फटकारते हुए कहा—"हे पापी! मुझे ज्वाला-मुख नाम का ब्रह्मराक्षस समझो, यह पिप्पल मेरा निवास-स्थान है, देवताओं के द्वारा भी इसकी अवहेलना नहीं की जा सकती है, वही यह स्त्री के साथ तुम्हारे द्वारा अपमानित करके उपभोग किया गया है, तो अपनी उद्दण्डता का फल भोगो। दुराचारी! यह मैं काम से तुझ अन्धे बने हुए का हृदय फाड़ कर खाऊँगा और शोणित पीऊँगा"। यह सुनकर और उन भय-ङ्कर राक्षस को अवध्य जाकर तथा भय से व्याकुल प्रियतमा को देखकर भय से राजा ने विनय करते हुए कहा—"न जानते हुए मैंने तुम्हारा अपराध किया, उसे क्षमा करो। तुम्हारे आश्रम में मैं अतिथि हूँ और तुम्हारी शरण में आया

राजा चन्द्रप्रभः क्षेत्रजः चौरस्यैव पुत्रः, नान्ययोः, तस्मात् चौरहस्ते एव स पिण्डो देयः। विप्रस्य जनकस्यापि स पुत्रो न भवितुमर्हति, तेन हि धनेन एकां रजनीम् आत्मा विक्रीतः। राज्ञः सूर्य्यप्रभस्यापि संस्कारदानवर्द्धनादिभिः असौ पुत्रो भवेत्, यदि तत्कृते मञ्चस्थस्यास्य स्वर्णसञ्चयो न प्राप्येत; राजा सूर्य्यप्रभो न्यस्तधनेनास्य वर्द्धनादिकमकरोत्, तन्माता यस्य हस्ते समर्पिता, यस्याऽऽज्ञया राज्ञस्तस्य चन्द्रप्रभस्य जननं, यस्य च तत् निखिलं धनं तन्मात्रा समासादितं; तेनैव विप्रसुतात् बीजं क्रीतं, तस्यैव चौरस्य स क्षेत्रजः पुत्रः, तस्मात् तस्यैव हस्ते पिण्डो देय इति मे मतिः"।

इत्याकर्ण्य स वेतालः पुनरलक्षितः नृपस्कन्धात् तमेव शिंशपातरुमाश्रयत्। राजाऽपि तथैव निश्चलप्रतिज्ञस्तमन्वसरत्।

---

चोर का ही क्षेत्रज पुत्र है, अन्य दोनों का नहीं, इसलिये चोर के हाथ में ही वह पिण्ड दिया जाना चाहिये। यद्यपि ब्राह्मण उसका जनक (उत्पन्न करने वाला) है, फिर भी वह उसका पुत्र नहीं हो सकता है; क्यों कि उसने धन के द्वारा एक रात के लिये अपने को बेच लिया था। राजा सूर्यप्रभ का भी संस्कार-दान-बढ़ाने आदि के द्वारा पुत्र होता, यदि उसके लिये मचान पर रक्खे हुए इसका स्वर्ण-समूह न प्राप्त हुआ होता। राजा सूर्यप्रभ इसके साथ रक्खे हुए धन से इसका संवर्धन आदि किये थे। उसकी माता जिसके हाथ में सौंपी गयी थी, जिसकी आज्ञा से उस राजा चन्द्रप्रभ का जन्म हुआ था, जिसका वह सम्पूर्ण धन उसकी माता को प्राप्त हुआ था, उसी धन के द्वारा ब्राह्मण के पुत्र से बीज खरीद किया गया था, उसी चोर का वह क्षेत्रज पुत्र है। इसी कारण से उसी चोर के हाथ में पिण्ड दिया जाय, यही मेरा विचार है"।

यह सुन कर उस वेताल ने फिर राजा के कन्धे से अदृश्य होकर उसी शीशम के वृक्ष का आश्रय लिया निश्चल प्रतिज्ञावाले उस राजा ने भी उसी प्रकार उसका अनुसरण किया।



तिथिस्त्वां शरणं गतः, दास्यामि च ते ईप्सितं पुरुषं पशुं, येन ते तृप्तिर्भविता; तत् प्रसीद, क्रोधं परिहर"। इति राज्ञो वचनमाकर्ण्य स ब्रह्मराक्षसः शान्तकोपः,—"अस्तु, को दोषः!" इति विविच्य प्रत्यभाषत,—"राजन्! यः सप्तवर्षीयः महासत्त्वः विवेकवान् ब्राह्मण-पुत्रः स्वेच्छया त्वदर्थमात्मानं दद्यात्, यञ्च हन्यमानं तन्माता हस्तयोः, तत्पिता च पादयोः सुदृढं महीतले सन्निवेश्य अवष्टभ्नाति, सप्तदिना-भ्यन्तरे तादृशं पुरुषं स्वयं खड्गप्रहारेण मह्यमुपहारीकरोषि चेत्, तदा ते इमं न्यक्कारं क्षमिष्ये, अन्यथा त्वां सपरिच्छदं सद्यो नाशयि-ष्यामि"। श्रुत्वैतत् स राजा भयात्,—"तथा" इति प्रतिपेदे। सोऽपि ब्रह्मराक्षसः तत्क्षणात् तिरोबभूवे।

अथ राजा चन्द्रालोकस्तया इन्दीवरप्रभया सह हयाऽऽरूढः सुदु-र्मना इतस्ततः सैन्यानि विचिन्वन् प्रायात्। "अहो! अहं मृगयया मदनेन च विमोहितः अकाण्डे पाण्डुरिव विनाशं गतः, अस्य रक्षसः तादृशः उपहारः कुतो लभ्यते? तदिदानीं निजमेव नगरं यामि, पश्यामि, किं भावि" इति ध्यायन् सः समन्तात् अन्विष्यन् स्वसैन्यं

---

हूँ, तथा तुमको अभीष्ट मनुष्य अथवा पशु जिससे तुम्हारी तृप्ति होगी वह दूँगा, अतः प्रसन्न होओ, क्रोध दूर करो" यह राजा का वचन सुन कर क्रोध शान्त होने से उस ब्रह्मराक्षस ने "ठीक है, क्या हानि है!" यह सोचकर कहा—"महाराज! जो सात वर्ष का महा साहसी, ज्ञानी, ब्राह्मणकुमार स्वेच्छा से तुम्हारे लिये अपने आप को दे दे, जिसको मारे जाने के समय में उसकी माता दोनों हाथों को मारे जाने के समय में उसकी माता दोनों हाथों को और उसके पिता दोनों पैरों को मजबूती से पृथ्वी पर रख कर दबाये रहे, सात दिन के अन्दर उस प्रकार के मनुष्य को स्वयं खड्ग प्रहार से मेरे लिये यदि बलिदान करोगे तब तुम्हारे इस अपमान को क्षमा कर दूँगा, नहीं तो परिवार-सहित तुम्हारा शीघ्र ही विनाश कर दूँगा'। यह सुनकर उस राजा ने भय के कारण "वैसा ही करूँगा" यह स्वीकार किया। वह ब्रह्म राक्षस भी उसी समय अन्तर्धान हो गया।

इसके बाद राजा चन्द्रालोक उस इन्दीवरप्रभा के साथ घोड़े पर चढ़ कर होते हुए इधर-उधर सैनिकों को खोजते हुए चला। "अरे! मैं शिकार तथा उदासकाम से मोहित होकर असमय में ही राजा पाण्डु के सदृश नष्ट हो गया। इस राक्षस के लिये उस प्रकार का उपहार कहाँ से मिलेगा? तो इस समय अपने ही नगर को चलूँ, देखता हूँ कि क्या भावी है" यह सोचते हुए उसने चारों

वाराणसीं जगाम। तस्याञ्च त्रीणि दिनानि उपोष्य वृषभध्वजमच्चर्चयित्वा गयां प्रति प्रययौ।

क्रमेण नानाविधानि वनानि गिरीन् नदीश्चातिक्रम्य गयाशिरः प्राप। तत्र विधिवत् भूरिदक्षिणं श्राद्धं विधाय गयाकूपे पिण्डं ददतोऽस्य पिण्डमादातुं त्रयो मानुषपाणयः समुत्तस्थुः। तदवलोक्य स राजा विभ्रान्तः,—"किमेतत् ?" इति विमूढमतिः "कस्मिन् पाणौ पिण्डं क्षिपामि" इति निजान् ब्राह्मणानुवाच। "देव ! अयं तावदेकश्चौरस्य पाणिर्निश्चितं, यस्मिन् लोहमयः शङ्कुर्दृश्यते, द्वितीयश्च करोऽयं ब्राह्मणस्य, यतो धृतपवित्रो दृश्यते, तृतीयश्चायं पाणिर्महाराजस्य साङ्गुलीयः सुलक्षणो विभाव्यते; तत्र विज्ञो वयं, क्वायं पिण्डो निक्षेप्यः, किमिदं भवेत्" इति। इति तैर्द्विजैरुक्तो राजा निश्चयं कर्त्तुं नाशकत्"।

इति विचित्रां कथामाख्याय वेतालः स्कन्धस्थित एव पप्रच्छ,—"राजन् ! कस्मिन् हस्ते स पिण्डो देय इति संशयं छिन्धि, स्मर्य्यतां त्वया प्राक्तनः समयः" इति। राजाऽब्रवीत्,—"वेताल ! यतोऽसौ

---

काशी नगरी में पहुँच गया। वहाँ भी तीन दिन उपवास करके शंकर जी की पूजा करके गया के प्रति प्रस्थान किया।

क्रमशः अनेक प्रकार के ज़ंगल पहाड़ और नदियों को पार करके वह राजा गयाशिर तीर्थ में पहुँचा। वहाँ विधानपूर्वक पर्याप्त दक्षिणा देते हुए श्राद्ध करके गया-कूप में पिण्ड देने के समय इसका पिण्ड लेने के लिए मनुष्य के तीन हाथ उपस्थित हुए। यह देखकर भ्रम में पड़े हुए उस राजा ने 'यह कैसी बात है ?" इस रूप में हतबुद्धि होकर "किस हाथ में पिंड फेकूँ ?" यह अपने ब्राह्मणों को पूछा। "महाराजा ! निश्चित ही यह चोर का एक हाथ है, जिसमें सेंध खोदने वाला लोहे का हथियार है, दूसरा यह हाथ ब्राह्मण का है, क्योंकि पवित्री धारण किये हुए दिखाई पड़ता है, तीसरा यह हाथ महाराज का है, अंगूठी पहने हुए सुन्दर लक्षणों से युक्त मालूम होता है। किन्तु हम लोग यह नहीं जानते हैं कि यह पिण्ड किस में डाला जाय ? यह क्या है ?"। यह उन ब्राह्मणों के द्वारा कहे जाने पर राजा कुछ निश्चय नहीं कर सके"।

यह विचित्र कथा कहकर कन्धे पर से ही वेताल ने पूछा—"महाराज ! 'किस हाथ में वह पिंड दिया' यह सन्देह दूर करो, पहले का किया हुआ नियम याद करो"। राजा ने कहा—"वेताल ! क्योंकि यह चन्द्रप्रभ राजा

स्वनगरं चित्रकूटञ्च प्राप । तत्र अनुरूपभार्य्यालाभेन परितुष्टाभिः प्रकृतिभिः महोत्सवे विहितेऽपि अन्तर्गतविषादस्य तस्य दुःखदुःखेनैव दिनशेषो व्यपगमत् । द्वितीयेऽहनि स रहसि मन्त्रिभ्यः तं सर्वं वृत्तान्तमाचचक्षे । तेषाञ्चैकः सुमतिर्मन्त्री प्रत्यब्रवीत्,—"देव ! विषादस्ते मा भूत्, अहमन्विष्यन् तादृशमुपहारमालेष्यामि, विचित्रा हि मेदिनी" । एवं राजानमाश्वास्य स मन्त्री सौवर्णीं शिशुप्रतिमामकरोत् । "यः सप्तवर्षदेशीयः विप्रपुत्रः सत्त्ववान् आत्मानं मातापित्रोरनुज्ञया ब्रह्मरक्षसः उपहाराय प्रयच्छति, यश्च हन्यमानस्ताभ्यां मातापितृभ्यां हस्तपादे प्रगृह्यते, राजा तत्पित्रोरुपकाराथ ग्रामशतसहितां रत्नयुक्तामिमां सौवर्णीं प्रतिमां तस्मै दास्यति" इति तां शिशुप्रतिकृतिं भ्रामयन् स मन्त्री अजस्रं पटहोद्घोषणमकारयत् ।

एतदाकर्ण्य एकस्मिन् अग्रहारे कश्चित् द्विजशिशुः सप्तवर्षदेशीयोऽपि अतिधीरः अद्भुताकृतिः बाल्येऽपि सदा परहिते रतः प्रजानां पुण्यपरिपाक इव मूर्त्तिमान् उद्घोषकान् प्रोवाच,—"भद्राः ! युष्मदर्थे

---

तरफ खोजते हुए अपने सैनिकों को तथा अपने नगर को प्राप्त किया । वहाँ अपने योग्य पत्नी की प्राप्ति से सन्तुष्ट प्रजाओं के द्वारा महोत्सव किये जाने पर भी अन्दर में विषाद भरे हुए उस राजा का अत्यन्त दुःख से अवशेष दिन समाप्त हुआ । दूसरे दिन उसने एकान्त में मन्त्रियों को वह सारा वृत्तान्त कह सुनाया । उनमें से एक बुद्धिमान् मन्त्री ने कहा—"महाराज ! आप विषाद मत करें, खोजता हुआ उस प्रकार का उपहार ले आऊँगा, क्योंकि यह पृथ्वी विचित्र है" । इस प्रकार राजा को सन्तोष देकर उस मन्त्री ने एक बच्चे की सुवर्णमयी ( सोने की ) प्रतिमा बनवायी । "जो सात वर्ष का साहसी ब्राह्मण कुमार अपने को माता-पिता की आज्ञा से ब्रह्मराक्षस के उपहार के लिये दे देवे और जो मारा जाता हुआ उस माता-पिता के द्वारा हाथ-पैर पकड़ा जाय; उसके माता-पिता के उपकार के लिये एक सौ ग्राम (गाँव) के सहित रत्नों से सयुक्त करके यह सुवर्णमयी प्रतिमा उसे देंगे" उस सुवर्णमय शिशु-प्रतिमा को घुमाते हुए उस मन्त्री ने वार वार नगाड़े के शब्द के साथ यह घोषणा करवायी ।

यह सुन कर एक गाँव में सात वर्ष की उम्रवाले होने पर भी अत्यन्त धैर्यशाली, अद्भुत स्वरूपवाले, बचपन में भी सदा परोपकार में रत रहने वाले प्रजाओं के पुण्य के मूर्तिमान् परिपाक ( परिणाम ) के समान किसी ब्राह्मण-कुमार ने घोषणा करनेवालों को कहा—"महाशय ! आपके लिये मैं

राजा चन्द्रप्रभः क्षेत्रजः चौरस्यैव पुत्रः, नान्ययोः, तस्मात् चौरहस्ते एव स पिण्डो देयः। विप्रस्य जनकस्यापि स पुत्रो न भवितुमर्हति, तेन हि धनेन एकां रजनीम् आत्मा विक्रीतः। राज्ञः सूर्य्यप्रभस्यापि संस्कारदानवर्द्धनादिभिः असौ पुत्रो भवेत्, यदि तत्कृते मञ्चस्थस्यास्य स्वर्णसञ्चयो न प्राप्येत; राजा सूर्य्यप्रभो न्यस्तधनेनास्य वर्द्धनादिकमकरोत्, तन्माता यस्य हस्ते समर्पिता, यस्याऽऽज्ञया राज्ञस्तस्य चन्द्रप्रभस्य जननं, यस्य च तत् निखिलं धनं तन्मात्रा समासादितं; तेनैव विप्रसुतात् बीजं क्रीतं, तस्यैव चौरस्य स क्षेत्रजः पुत्रः, तस्मात् तस्यैव हस्ते पिण्डो देय इति मे मतिः"।

इत्याकर्ण्य स वेतालः पुनरलक्षितः नृपस्कन्धात् तमेव शिंशपातरुमाश्रयत्। राजाऽपि तथैव निश्चलप्रतिज्ञस्तमन्वसरत्।

---

चोर का ही क्षेत्रज पुत्र है, अन्य दोनों का नहीं, इसलिये चोर के हाथ में ही वह पिण्ड दिया जाना चाहिये। यद्यपि ब्राह्मण उसका जनक (उत्पन्न करने वाला) है, फिर भी वह उसका पुत्र नहीं हो सकता है; क्यों कि उसने धन के द्वारा एक रात के लिये अपने को बेच लिया था। राजा सूर्यप्रभ का भी संस्कार-दान-बढ़ाने आदि के द्वारा पुत्र होता, यदि उसके लिये मचान पर रक्खे हुए इसका स्वर्ण-समूह न प्राप्त हुआ होता। राजा सूर्यप्रभ इसके साथ रक्खे हुए धन से इसका संवर्धन आदि किये थे। उसकी माता जिसके हाथ में सौंपी गयी थी, जिसकी आज्ञा से उस राजा चन्द्रप्रभ का जन्म हुआ था, जिसका वह सम्पूर्ण धन उसकी माता को प्राप्त हुआ था, उसी धन के द्वारा ब्राह्मण के पुत्र से बीज खरीद किया गया था, उसी चोर का वह क्षेत्रज पुत्र है। इसी कारण से उसी चोर के हाथ में पिण्ड दिया जाय, यही मेरा विचार है"।

यह सुन कर उस वेताल ने फिर राजा के कन्धे से अदृश्य होकर उसी शीशम के वृक्ष का आश्रय लिया निश्चल प्रतिज्ञावाले उस राजा ने भी उसी प्रकार उसका अनुसरण किया।



अहमात्मानं ददामि, तिष्ठत, पितरौ बोधयित्वा द्रुतमागच्छामि" इति तानभिधाय, तैश्चानुमतः स बालः गृहं गत्वा रचिताञ्जलिः पितराव-ब्रवीत्,—"अम्ब ! तात ! अहं सर्वसत्त्वार्थम् एतं विनश्वरं देहं ददामि, तन्मामनुजानीतम्, इमाञ्च राजदत्तां हेमरत्नमयीं ग्रामशतान्विताम् आत्मप्रतिकृतिं गृहीत्वा वां वितरामि एवं सति मम युष्मदानृण्यं परार्थश्च सिध्यति, युवाञ्च चिरमदरिद्रौ बहून् पुत्रानवाप्स्यथः"। इतिवादिनं तं सहसा तौ पितरौ अवोचतां,—"पुत्र ! किमेतत् भाषसे ? वातेन किं क्षुभितोऽसि ? किं वा ग्रहगृहीतोऽसि ? अन्यथा कथमेवं प्रलपसि ? को हि अर्थैः शिशुं घातयेत् ? कथं शिशुः देहं दद्यात् ?"। एतत् पित्रोर्वचः श्रुत्वा स बालः पुनरुवाच,—"नाहं बुद्धिमोहात् ब्रवीमि, शृणुतं मे अर्थवत् वचनम्, अवाच्याशुचिपूर्णं जुगुप्सितं दुःखक्षेत्रं शरीरमिदम् अचिरात् विनाशि, तदेतेन अत्यसारेण यदि किञ्चित् सुकृतमुपार्ज्यते, तदेव अस्मिन् संसारे सारमिति बुधैरुच्यते, सर्वभूतोपकारादन्यत् किमस्ति सुकृतम् ? तत्रापि पित्रोर्भक्तिश्चेत्

---

अपने आप को दूँगा, ठहर जाइये, माता-पिता को समझा कर शीघ्र आता हूँ" यह उन लोगों को कह कर, उन लोगों से स्वीकृति लेकर उस बालक ने घर जाकर हाथ जोड़कर माता-पिता को कहने लगा—"हे माता जी ! हे पिता जी ! मैं सभी प्राणियों के लिये यह विनश्वर शरीर देता हूँ, वह मुझे आज्ञा दीजिये, राजा की दी हुई, सुवर्ण तथा रत्नों से बनी सौ ग्रामों से संयुक्त अपनी इस प्रतिमा को लेकर तुम दोनों को देता हूँ, ऐसा करने से मेरी आप दोनों से उऋणता तथा परोपकार दोनों सिद्ध होते हैं और आप दोनों हमेशा के लिये धनी हो कर बहुत पुत्र प्राप्त करेंगे" यह कहनेवाले उस पुत्र को तुरन्त वे दोनों माता-पिता कहने लगे—"पुत्र ! यह क्या कह रहे हो ? क्या वात रोग से क्षुब्ध हो गये ? अथवा ग्रहों से पकड़े गये हो ? नहीं तो क्यों इस प्रकार प्रलाप करते हो ? क्यों कि कौन मनुष्य धन के बदले में पुत्र का वध करावेगा ? और कौन बच्चा अपना शरीर देगा ?" यह माता-पिता का वचन सुन कर उस बच्चे ने फिर कहा—"मैं बुद्धि के विभ्रम से नहीं कह रहा हूँ, मेरा सार्थक वचन सुनिये, न बोलने योग्य अपवित्र पदार्थों से भरे हुए, घृणित दुःखका घर, यह शरीर शीघ्र ही नाश होने वाला है, इस लिये इस निस्तत्त्व शरीर से यदि कुछ पुण्य उपार्जन किया जाय तो वही इस संसार में सार है, यह विद्वानों के द्वारा कहा जाता है। सभी प्राणियों के उपकार से बढ़ कर अन्य कौन सा पुण्य है ? उस में भी यदि माता-पिता की

# अथ विंशकथा

ततः स राजा शिंशपान्तिकं गत्वा पुनस्तं वेतालं स्कन्धे आरोप्य मौनी तथैव चचाल। वेतालोऽपि स्कन्धवर्त्ती तं मौनिनमवलोक्य, प्रोवाच—"राजन्! कस्तेऽयं निर्बन्धः? गृहं गच्छ, रात्रिसुखं सेवस्व, कुभिक्षोस्तस्यान्तिकं मां नेतुं न ते युक्तम्, आग्रहातिशयश्चेत् तव, तदा पुनरिमां कथामाख्यामि, शृणु—

अस्ति चित्रकूटं नाम नगरम्; तत्राऽऽसीत् प्रणयिचक्षुषाममृताऽऽसारवर्षी राजशिरोमणिश्चन्द्रालोको नाम। विद्वांसः यं शौर्य्यकरिणः आलानं, दानस्योत्पत्तिनिकेतनं, रूपस्य च विलासभवनं वदन्ति स्म। सर्वसम्पत्पूर्णस्यापि सदृशीं भार्य्यामप्राप्तवतस्तस्य हृदि महानुद्वेगः समभवत्।

एकदाऽसौ राजा उद्वेगविनोदाय अश्वीयसैनिकपरिवृतो मृगयाऽर्थं महाऽटवीं जगाम। तत्र निरन्तरैः शरैः वराहवृन्दानि श्यामलानि

---

## बीसवीं कथा

तब उस राजा ने शीशम के पास जाकर फिर उस वेताल को कन्धे पर उठा कर मौन होकर उसी प्रकार प्रस्थान किया। कन्धे पर रहनेवाले वेताल ने उस राजा को मौन देखकर कहा—"महाराज! तुम्हारा यह कैसा दुराग्रह है? घर जाओ, रात्रि के सुख का उपभोग करो, उस नीच तपस्वी के पास मुझे ले जाना, तुम्हारे लिये उचित नहीं है। यदि तुम्हारा बहुत आग्रह है तो फिर यह कथा कहता हूँ, सुनो—

चित्रकूट नाम का एक नगर है, वहाँ याचकों तथा प्रेमियों की आखों में अमृत की धारा बरसानेवाला, राजाओं में शिरोमणि चद्रालोक नाम का राजा था। जिसको विद्वान लोग वीरतारूपी हाथी का बन्धन-स्तम्भ, दान की उत्पत्ति का घर और सौन्दर्य का विलास-भवन कहते थे। सभी सम्पत्तियों से पूर्ण रहने पर अपने योग्य पत्नी नहीं प्राप्त होने के कारण उसके मन में बहुत बड़ी व्याकुलता रहती थी।

एक बार वह राजा अपनी व्याकुलता को बहलाने के लिये घोड़सवारों के सैनिकों से घिरा हुआ शिकार खेलने के लिये विशाल वन में गया। जैसे सूर्य किरणों से काले अन्धकारों को फाड़ते हैं उसी प्रकार वहाँ लगातार

साध्यते, तदा देहादन्यत् किमिव अधिकं सम्पत्स्यते ?"। इत्येवं धीरवचनैः सुदृढनिश्चयः स शिशुः शोचन्तौ पितरौ स्वमनीषितमङ्गीकारयामास; गत्वा च राजभृत्येभ्यः तां हिरण्मयीं शतग्रामशासनसहिताम् आनीय ताभ्यां पितृभ्यां प्रददौ।

अथ तान् राजभृत्यानग्रतः कृत्वा स बालकः पितृभ्याम् अन्वितः चित्रकूटं नगरं प्रति प्रायात्। तत्र प्राप्तम् अखण्डिततेजसं तं बालकं रक्षारत्नमिव दृष्ट्वा नृपतिः भृशं ननन्द। तञ्च रचितमाल्यविलेपनं गजपृष्ठमारोप्य सपितृकं तत् ब्रह्मरक्षसः सदनं निनाय। तत्र तस्याश्वत्थस्य पार्श्वतः मण्डलमालिख्य पुरोहितेन कृतपूजेन वह्नौ हुते स ब्रह्मराक्षसः मुक्ताट्टहासः, स्वाध्यायं पठन्, घूर्णन्, रक्तासवक्षीवः, मुहुः श्वसन्, जृम्भमाणः, नेत्रैर्ज्वलन्, दिशः देहच्छायया अन्धकारिताः कुर्वन् ज्वालामुखो महारौद्रदर्शनः प्रादुरभूत्। ततो राजा तं दृष्ट्वा विनीतः प्राब्रवीत्,—"भगवन्! अयं तव अभिमतो नरोपहारः

---

सेवा सिद्ध हो जाय तो इस शरीर से अधिक अन्य क्या सिद्ध होगा ?" इस प्रकार धैर्य के वचनों से दृढ़ सिद्धान्तवाले उस बच्चे ने अफशोस करनेवाले माता-पिता से अपनी अभिलाषा का स्वीकार करवा लिया और जाकर राजा के नौकरों से सौ ग्रामों के आदेशपत्र के सहित वह सोने की प्रतिमा लाकर अपने माता-पिता को दे दी।

इसके बाद राजा के उन नौकरों को आगे करके माता-पिता के साथ वह बालक चित्रकूट नगर को गया। वहाँ पहुँचे हुए अमलिन कान्तिवाले उस बालक को सुरक्षा के रत्न के समान देखकर राजा अत्यन्त आनन्दित हुए। और उसको चन्दन लगाकर माला पहना कर तथा हाथी की पीठ पर चढ़ा कर उसके माता-पिता के साथ ब्रह्मराक्षस के उस निवास-स्थान पर ले गया। वहाँ पिप्पल के पास पुरोहित के द्वारा मण्डलाकार रेखा बनाकर पूजा तथा अग्नि में होम कर लेने पर वह अट्टहास करता हुआ, वेदमन्त्र पढ़ता हुआ, इधर-उधर घूमता हुआ, शोणित की मदिरा पीकर उन्मत्त बना हुआ, बार बार लम्बी साँस तथा जम्हुआई लेता हुआ, आँखों से प्रज्वलित होता हुआ (चमकता हुआ), शरीर की कान्ति से दिशाओं को अन्धकारित करता हुआ ज्वालामुख नाम का ब्रह्मराक्षस महाभयङ्कर स्वरूप से प्रकट हुआ। तब राजा उसको देखकर विनीत होकर कहने लगे—"भगवन्! यह आपका अभिलषित मनुष्योपहार लाया गया है, आज आपकी प्रतिज्ञा का वह सातवाँ

तमांसीव रविः करैः भिन्दन् समरदुर्मदान् सिंहान् शरशय्यासु शाययन्, शरभांश्च पर्वतोपमान् कुलिशकर्कशप्रासपातैः पातयन् विचचार। इत्थं मृगानन्विष्यन् तीव्रपार्ष्णिप्रहारेण वाजिनं भृशं ताडयामास, स च वाजी कशाघातेन पार्ष्णिघातेन च गाढं ताडितो विषमं समञ्चागणयन् क्षणात् वाताधिकजवेन तं भूपं वनान्तरं नयन् दश योजनानि अतिक्रमयामास।

इत्थं वाहे चलिते राजा दिङ्मोहमुपेत्य भ्रमन् श्रान्तः आरात् एकं विपुलं सरो ददर्श। तत्र गत्वा च तुरगं विपर्याणं कृत्वा, स्नातपीतं तरुच्छायासु कतिपयानि यवसानि तस्मै दत्त्वा च, स्वयं कृतस्नानः सलिलं पिवन् विगतश्रमो रम्येषु तत्तत्प्रदेशेषु दृष्टिं निक्षिपन् कस्यचित् अशोकतरोरधस्तात् कामपि आमुक्तपुष्पाऽऽभरणां वल्कलांशुकशोभिनीं वद्धमुग्धजटाजूटसविशेषमनोरमां सखीद्वितीयाम् आश्चर्य्यरूपां मुनिकन्यां ददर्श, चिन्तयामास च कामशराहतः,—"केयम्? किंस्वित् सावित्री सरसीषु स्नातुमागता? आहोस्वित् स्वामिविभ्रष्टा गौरी

---

वाणों से काले सूकर-समूहों को फाड़ते हुए, युद्ध में दुर्द्धर्ष सिंहों को शरशय्या पर सुलाते हुए, पर्वतों के समान शरभों को वज्र के समान कठोर कुन्त (भाला) के प्रहार से गिराते हुए वह राजा विचरण करने लगा। इस प्रकार जङ्गली जानवरों को खोजते हुए तेजी के साथ एड़ी के आघात से घोड़े को वहुत प्रहार किया। और वह घोड़ा कोड़े के प्रहार से तथा एड़ी के प्रहार से अत्यन्त ताड़ित होकर सम और विषम भूमि की परवाह न करते हुए हवा से अधिक वेग से राजा को कुछ ही क्षण में दूसरे वन में ले जाते हुए दश योजन भूमि पार कर गया।

इस प्रकार घोड़े के चलने पर उस राजा ने दिग्भ्रम प्राप्त करके घूमते हुए थक कर समीप में एक विशाल सरोवर देखा। वहाँ जाकर घोड़े को जीन-रहित करके स्नान करने के वाद पानी पी लेने पर पेड़ की छाया में कुछ घास उसको देकर स्वयं भी स्नान करके पानी पीकर थकावट दूर करके उस राजा ने उन रमणीय प्रदेशों में आँख डालते हुए किसी अशोक वृक्ष के नीचे फूलों के आभूषण पहननेवाली, वल्कल वस्त्र से शोभा पानेवाली, सुन्दर जटा-जूट वाँधने से विशेषरूप से मनोहर, एक सखी के साथ में रहनेवाली तथा आश्चर्यजनक सौन्दर्यवाली किसी मुनिकन्या को देखा। और कामबाण से ताड़ित होकर वह राजा सोचने लगा—"यह कौन है? क्या? सावित्री सरोवर में स्नान करने के लिये आई है? अथवा पति से अलग होकर पार्वती ने फिर

समानीतः, अद्य स सप्तमो दिवसस्ते प्रतिज्ञायाः, तत् प्रसीद; गृहाण इममुपहारं यथाविधि"। इति राज्ञाऽर्थितः स ब्रह्मराक्षसः जिह्वया सृक्कणी लिहन् तमुपहारभूतं विप्रसुतमवलोकयामास। क्षणे च तस्मिन् स बालो महासत्त्वो हृष्टो व्यचिन्तयत्,—"अनेन स्वदेहदानेन यन्मया सुकृतम् अर्जितं, तेन मे स्वर्गो वा निरुपक्रियो मोक्षो मा भूत्, जन्मनि जन्मनि मे परार्थो देहो भूयात्"। इति तस्मिन् चिन्तयत्येव क्षणात् पुष्पवृष्टिमुचां देवानां विमानैः नभस्तलमापूर्य्यत।

अथ तस्य ब्रह्मरक्षसः पुरतः स्थापितं तं बालं माता करयोः पिता चरणयोरग्रहीत्। ततो यावत् खड्गमाकृष्य राजा तं जिघांसति, तावत् स शिशुस्तथा जहास; यथा सब्रह्मराक्षसास्ते सर्वे स्वं स्वं कर्म त्यक्त्वा तन्मुखप्रेक्षिणः कृताञ्जलयः प्रह्वाश्चाभवन्"।

इति विचित्रां कथामाख्याय स वेतालस्तं पुनरब्रवीत्,—"राजन्! तेन बालकेन तादृशे तस्मिन् प्राणान्तसमये यत् हसितं, तस्य को हेतुः? महदत्र कौतुकं मम, यदि न वक्ष्यसि जानन्नपि, तदा ते मूर्द्धा शतधा विदलिष्यति"। एतदाकर्ण्य स राजा तं प्रत्यभाषत,—"शृणु

---

दिन है, तो प्रसन्न होइये और इस उपहार को उचित विधि से ग्रहण करिये"। यह राजा के द्वारा प्रार्थना किये हुए उस ब्रह्मराक्षस ने जीभ से ओठों के कोरों को चाटते हुए उपहार बने हुए उस विप्रसुत को देखा। उस समय में वह महासाहसी हृष्ट बालक सोचने लगा—"अपने शरीर के इस दान से मेरे द्वारा जो कुछ पुण्य उपार्जन किया गया है उससे मुझे स्वर्ग अथवा उपकार-हीन मोक्ष भी न मिले किन्तु जन्म-जन्म में परोपकार के लिये शरीर मिले"। इतना उसके सोचते रहने पर उसीक्षण फूलों की वर्षा करनेवाले देवताओं के विमानों से आकाश भर गया।

इसके बाद उस ब्रह्मराक्षस के सामने रक्खे हुए उस बालक को माता दोनों हाथों में तथा पिता दोनों पैरों में पकड़ लिये। तब तलवार खींच कर जब तक राजा उसको मारना चाहता है तब तक वह बालक उस प्रकार हँसने लगा, जिससे ब्रह्मराक्षस सहित वे सभी अपना-अपना कार्य छोड़कर उसी का मुँह देखते हुए हाथ जोड़ कर नम्रभाव से खड़े हो गये"।

यह विचित्र कथा कहकर उस वेताल ने उस राजा को फिर कहा—"महाराज! वह बालक उस प्रकार के प्राण अन्त होने के उस समय में जो हँसने लगा, उसका क्या कारण था? मेरा इसमें बहुत कुतूहल है, यदि जानते हुए भी नहीं कहोगे तो तुम्हारा शिर सौ टुकड़ों में फट जायगा"।

पुनस्तपः कर्त्तुं प्रवृत्ता ? तदेनामुपसृत्य वार्त्तामुपलप्स्ये" इत्यालोच्य शनैस्तस्याः समीपमाययौ। साऽपि तमायान्तं दृष्ट्वा तद्रूपेण समाकृष्ट-चित्ता प्रारब्धपुष्पस्रक्सन्नहस्ता व्यचिन्तयत्,—"कोऽयमीदृक् अस्मिन्नरण्ये ? विद्याधरः कोऽपि वा ? चरितार्थे ममाद्य दृशौ" इत्थं वितर्क्य त्रपया तिर्य्यक् पश्यन्ती उत्थाय सोरुस्तम्भाऽपि गन्तुं प्रावर्त्तत। अथ राजा तामुपेत्याब्रवीत्,—"सुन्दरि ! प्रथमदृष्टस्य दर्शनमात्रार्थिनः दूराऽऽगतस्य जनस्य स्वागतादिकमास्तां, कोऽयमाश्रमिधर्मः यदेतस्मात् पलाय्यते ?"। इति तेन राज्ञाऽभिहिते विचक्षणा तदीया सखी तत्र राजानमुपवेश्य अतिथिसत्क्रियामकरोत्।

अथ राजा तां सविनयम् अप्राक्षीत्,—"भद्रे ! अनया तव सख्या कः पुण्यवान् वंशः अलङ्क्रियते ? कानि वाऽस्याः कर्णरसायनानि नामाक्षराणि ? कथं वा अनया कुसुमसुकुमारमिदं वपुः ईदृशे वयसि तापस्या वृत्त्या विजने कदर्थीक्रियते ?"। एतत् राजवचनमाकर्ण्य सखी तं प्रत्यभाषत,—"महाभाग ! एषा महर्षेः कण्वस्य कन्यका

---

तपस्या करना प्रारम्भ किया है ? तो इसके पास पहुँच कर समाचार ज्ञात करूँगा"। यह सोचकर धीरे धीरे उसके समीप आया। वह भी उसको आते हुए देखकर उसके रूप से खीचे हुए मनवाली, फूल की माला गूथने से हाथ रुक जाने पर सोचने लगी—"इस वन में इस प्रकार का यह कौन है ? क्या कोई विद्याधर है ? आज मेरी आँखें सफल हो गईं" इस प्रकार वितर्क करके लज्जा के कारण टेढ़ी दृष्टि से देखती हुई, उठकर जांघों में स्तम्भ हो जाने पर भी जाने लगी। इसके बाद राजा उसके पास पहुँच कर कहने लगे—"हे सुन्दरी ! दूर से आये हुए, पहले पहल देखे हुए, केवल दर्शन चाहनेवाले मनुष्य का स्वागत आदि तो दूर रहे, किन्तु आश्रमवासियों का यह कौन सा धर्म है कि इस स्थान से भाग रही हो ?" यह उस राजा के द्वारा कहे जाने पर उसकी चतुर सखी ने वहाँ राजा को बैठा कर अतिथि-सत्कार किया।

इसके बाद राजा ने उसको नम्रता के साथ पूछा—"हे कल्याणिनि ! तुम्हारी इस सखी के द्वारा कौन सा पवित्र वंश सुशोभित किया जाता है ? कानों को सुख देनेवाले इसके नाम के कौन-कौन अक्षर हैं ? क्यों इसके द्वारा फूल के समान सुकुमार यह शरीर इस प्रकार की उम्र में तपस्विनी के व्यवहार से निर्जन वन में पीड़ित किया जाता है ?" यह राजा का वचन सुनकर सखी ने उसको जवाब दिया—"महाशय ! यह मेनका से उत्पन्न महर्षि कण्व की

तस्य शिशोर्हासे अभिप्रायम्;—यो हि दुर्बलो जन्तुः भये प्रत्युपस्थिते त्राणार्थं मातरं पितरं, तदभावे राजानं त्राणार्थं विधात्रा निर्मितम्, एषाञ्चालाभे देवतामाक्रन्दति, तस्य एकोऽपि एतेषु आश्रयो भवेत्, अस्य तु सर्वमेव अन्यथा जातम्; पितृभ्यां हस्तपादं रुद्धम् अर्थतृष्णया, राजा च आत्मानं त्रातुं स्वयं हन्तुमुद्यतः, ब्रह्मरक्षः दैवतमपि तस्य भक्षणार्थमुपस्थितम्। अध्रुवस्य अन्तविरसस्य आधिव्याधियुक्तस्य देहस्यार्थे विमूढानामीदृक् विडम्बनं, यत्र ब्रह्मविष्णुरुद्रादयोऽपि अवश्यं विनाशिनः, तत्रैषाम् ईदृशानां शरीरस्थैर्य्यवासना काऽपि? एतत् मोहवैचित्र्यमेषां दृष्ट्वा वाञ्छितं सिद्धञ्च मत्वा आश्चर्य्यहर्षोदयात् स द्विजशिशुर्जहास"। इति राजवचनमाकर्ण्य स वेतालः तस्य स्कन्धात् भूयोऽपि स्वकं निलयमाससाद। राजाऽपि दृढसङ्कल्पस्तमनुययौ। अम्भोनिधीनामिव सतां हृदयमक्षोभ्यं हि।

---

यह सुनकर राजा ने उसको उत्तर दिया—"उस बालक के हँसने का तात्पर्य सुनो जो दुर्बल प्राणी है उसके ऊपर भय उपस्थित होने पर उसके प्राणों की रक्षा के लिये माता को पिता को उनके अभाव में राजा को त्राण करने के लिये विधाता ने बनाया है, इनके न रहने पर वह देवता को पुकारता है, उसका इनमें से कोई एक आश्रय होता है, किन्तु इसके तो सब प्रतिकूल हो गये; धन के लोभ से माता-पिता ने इसके हाथ-पैर पकड़ लिये, राजा भी अपनी रक्षा के लिये स्वयं वध करने को तैयार हो गया, ब्रह्मराक्षस देवता होने पर उसको खाने के लिये उपस्थित हो गया था। अस्थायी, अन्त में अप्रीतिकर होनेवाले तथा चिन्ता और व्याधि से पीडित रहनेवाले इस शरीर के लिये मूर्खों का इस प्रकार पतन हो रहा है, जहाँ ब्रह्मा-विष्णु-महेश भी अवश्य नश्वर हैं वहाँ इस प्रकार के इन लोगों की शरीर-स्थिरता की अभिलाषा एक विचित्र वस्तु है। इन लोगों की यह मोह की विचित्रता देखकर और अपनी अभिलाषा सिद्ध हुई समझ कर आश्चर्य तथा हर्ष के उत्पन्न होने से वह ब्राह्मणकुमार हँसा था"। यह राजा का वचन सुनकर वह वेताल उस राजा के कन्धे पर से फिर अपने निवास स्थान पर चला गया। दृढ संकल्पवाले उस राजा ने भी उसका अनुसरण किया क्योंकि समुद्र के समान सज्जनों का हृदय स्थिर होता है।

मेनकासम्भवा आश्रम एव वर्द्धिता इन्दीवरप्रभा नाम। अस्मिन् सरसि पितुरनुज्ञया स्नातुमागता। इतो नातिदूरे अस्याः पितुराश्रमः"।

इत्यभिहितो राजा सम्प्रहृष्टः तुरङ्गममारुह्य तां कन्यां याचितुं महर्षेः कण्वस्याऽऽश्रममगात्, प्राविशच्च विनीतवेशः तमाश्रमं वहिः स्थापितवाहः। प्रविश्य च राजा जटावल्कलधरैः पादपैरिव तापसैः परिवृतं तेजसा चन्द्रमिव आह्लादिनं तम् ऋषिं कण्वमद्राक्षीत्, दृष्ट्वैवोपेत्य तं पादयोर्ववन्दे। सोऽपि ज्ञानी मुनिः कृताऽऽतिथ्यं विश्रान्तं तमभाषत,—"वत्स! चन्द्रालोक! शृणु यदहं वच्मि ते हितं, संसारेऽस्मिन् प्राणिनां मृत्युभयं यादृक्, तदहं जानामि, तत् निरर्थकं कथमिमान् मृगादीन् हंसि? भीतरक्षार्थमेव धात्रा क्षत्रस्य शस्त्रं सृष्टं, तत् धर्मेण प्रजा रक्ष, कण्टकान् समुन्मूलय; हस्त्यश्वादिभिः साधनैः चलां लक्ष्मीं साधयितुं यतस्व, राज्यसुखं भुङ्क्ष्व, दानं देहि, दिक्षु यशांसि विकिर, कृतान्तक्रीडितं मृगयाव्यसनं परित्यज; यत्र हन्तुर्हन्यमानस्य च तुल्यप्रमादिताऽस्ति, तेन बहुनर्थेन अनेन व्यापारेण किम्? पाण्डो-

---

पुत्री है, आश्रम में ही पालित हुई है, इसका नाम इन्दीवरप्रभा है। इस सरोवर में पिता की आज्ञा से स्नान करने के लिये आई है। यहाँ से थोड़ी ही दूरी पर इसके पिता का आश्रम है।

यह कहा हुआ राजा प्रसन्न होकर घोड़े पर चढ़ कर उस कन्या को माँगने के लिये महर्षि कण्व के आश्रम में गया। बाहर में घोड़े को रखकर विनीत वेश से उस आश्रम में प्रवेश किया। और प्रवेश करके उस राजा ने जटा-वल्कल धारण करनेवाले वृक्षों के समान तपस्वियों से घिरे हुए, तेज के कारण चद्रमा के समान आह्लादित करनेवाले उस कण्व ऋषि को देखा तथा देखते ही उनके पास जाकर उनके पैरों पर प्रणाम किया। उस ज्ञानी मुनि ने भी अतिथि-सत्कार किये हुए तथा विश्राम किये हुए उस राजा को—कहा हे वत्स चद्रालोक! जो मैं तुम्हारा हित कहता हूँ वह सुनो—इस संसार में प्राणियों को मृत्यु का भय जिस प्रकार का होता है, वह मैं जानता हूँ। इसलिये निरर्थक क्यों इन मृगादिकों को मारते हो? भयभीतों की रक्षा के लिये ही विधाता ने क्षत्रियों के शस्त्रों का सृजन किया है। अतः धर्म से प्रजाओं की रक्षा करो, दुष्टों का विनाश करो, हाथी-घोड़े आदि साधनों से चञ्चललक्ष्मी को वश में करने का प्रयत्न करो, राज्य का सुख भोगो, दान दो, दिशाओं में यश फैलाओ, यमराज का विलास जो यह शिकार खेलना है इसे छोड़ दो। जिसमें मारनेवाले तथा मारे जानेवाले दोनों का बराबर ही खतरा (प्राण सङ्कट) है। अत एव बहुत सङ्कटवाले इस कार्य से क्या लाभ?

# अथ एकविंशकथा ।

अथ राजा पुनः शिंशपामूलं गत्वा तं वेतालं स्कन्धेनादाय सत्वरं प्रतस्थे । तञ्च प्रस्थितं दृष्ट्वा स्कन्धवर्त्ती स वेतालः प्राब्रवीत्,—"राजन्! उद्गाढकन्दर्पामेकां कथां शृणु, कथयामि,—

अस्ति अमरावतीव परा सुकृतिनां दिवश्च्युतानां कृते धात्रा विहिता विशाला नाम पुरी। तस्यामासीत् सज्जनन्दनः श्रीमान् आक्रान्तबलिराजकः पद्मनाभ इति विश्रुतो नृपतिः। तस्मिंश्च राजनि तस्यां नगर्यां महावणिक् अर्थदत्तो नाम धनैः विजितधनपतिः प्रतिवसति स्म । तस्य अनङ्गमञ्जरीति एका सुता उदपद्यत, यया सुरसुन्दरी-प्रतिकृतिर्धात्रा दर्शिता। तेन वणिजा ताम्रलिप्तिनिवासिने मणिवर्मनाम्ने वणिजे सुता सा प्रदत्ता। एकापत्यतया च अतिवत्सलः स वणिक् तां भर्त्तृयुक्तां कन्यामनङ्गमञ्जरीं न तत्याज । स तु मणिवर्मा रोगिणः कटुतिक्तमौषधमिव तस्या अनङ्गमञ्जर्याः द्वेष्यो बभूव ।

---

## एक्कीसवीं कथा

इसके बाद राजा ने फिर शीशम की जड़ में जाकर उस वेताल को कन्धे पर उठा कर शीघ्रता से प्रथान किया। और जाते हुए उस राजा को देख कर कन्धे पर रहने वाले उस वेताल ने कहा—"महाराज! अत्यन्त कामवेगवाली एक कथा सुनो, कहता हूँ—

स्वर्ग से गिरे हुए पुण्यवानों के लिए विधाता के द्वारा बनायी हुई दूसरी स्वर्गपुरी के समान विशाला नाम की नगरी है। उसमें सज्जनों के समूह को आनन्दित करनेवाला, बलवान राजाओं को दबानेवाला समृद्धशाली पद्मनाभ नाम का प्रसिद्ध राजा था। उस राजा के समय में उस नगरी में अपने धन से कुबेर को जीतनेवाला, अर्थदत्त नाम का एक महाव्यापारी रहता था। उसकी अनङ्गमञ्जरी नाम की एक पुत्री उत्पन्न हुई, जिसके द्वारा विधाता ने अप्सरा की प्रतिमा दिखलायी थी। उस वनिये ने ताम्रलिप्ति नगर में निवास करनेवाले मणिवर्मा नामक वैश्य को वह पुत्री दे दी। एक सन्तान होने के कारण अत्यन्त स्नेही होकर उस बनिया ने पति-सहित उस पुत्री अनङ्गमञ्जरी को नहीं त्याग किया। वह मणिवर्मा तो रोगी के लिये कड़ुए तीते औषध के समान उस अनङ्गमञ्जरी का अप्रिय

नृपस्य वृत्तं त्वया किं न श्रुतम् ?"। एतदाकर्ण्य मुनिवचनं कार्य्यज्ञो नृपः समभिनन्द्य प्रत्यभाषत,—"भगवन्! अनुशिष्टोऽस्मि, महान् अनुग्रहो मे कृतः अनेन अनुशासनेन। अद्य प्रभृति मृगयानिवृत्तोऽभवं, प्राणिनो निर्भयाः सन्तु"। तदाकर्ण्य मुनिरब्रवीत्,—"तुष्टोऽस्मि तवामुना प्राणिष्वभयदानेन, तदीप्सितं वरं वृणीष्व" इति। ततः स कालज्ञो नृपतिरब्रवीत्,—"भगवन्! प्रसन्नोऽसि चेत्, सुतामिन्दीवरप्रभां मह्यं देहि"। इत्यर्थितः स मुनिस्तस्मै स्नाताऽऽगतां तामप्सरःसम्भवां कन्यां प्रददौ। ततः कृतविवाहः मङ्गलालङ्कृतः तां मुनिपत्नीकृतप्रसाधनाम् उद्बाष्पैस्तापसैरानिजाश्रमात् कृतानुयात्रामिन्दीवरप्रभां भार्य्यामादाय वाजिनमारुह्य राजधानीं प्रतस्थे।

एतस्मिन्नन्तरे दूराध्वगमनक्लान्तं तं नृपं वीक्ष्य भगवान् सहस्ररश्मिः खिन्नः इव अस्ताचलशिरसि समुपाविशत्। ददृशे च रात्र्यभिसारिका मृगनेत्रा क्रमादुक्तमन्मथा ध्वान्तद्रिनीलपटप्रावृता। तस्मिंश्चावसरे राजा जलाशयतीरवर्त्तिनं शाखापल्लवसंच्छन्नशाद्वलश्यामल-

---

क्या तुमने राजा पाण्डु का वृत्तान्त नहीं सुना है ?" मुनि का यह वचन सुन कर कर्तव्य जाननेवाला राजा प्रशंसा करके कहने लगा—"महाशय! आप के द्वारा मैं उपदेश दिया गया हूँ, आप ने इस उपदेश के द्वारा मेरे ऊपर महान् अनुग्रह किया है। आज से लेकर मैं शिकार से निवृत्त हो गया, सभी प्राणी निर्भय होकर रहें"। यह सुन कर मुनि ने कहा—"प्राणियों के लिये तुम्हारे इस अभय-दान से मैं सन्तुष्ट हूँ, अतः अभीष्ट वरदान मांगो"। तब अवसर जाननेवाले उस राजा ने कहा—"महाशय! यदि आप प्रसन्न हैं तो अपनी इन्दीवरप्रभा पुत्री मुझे दे दीजिये"। यह मांगे जाने पर उस मुनि ने उसको स्नान करके आयी हुई अप्सरा से उत्पन्न वह कन्या दे दी। इसके बाद विवाह करके वैवाहिक-मङ्गल कङ्कन से अलंकृत होकर उस राजा ने मुनिपत्नियों के द्वारा शृङ्गार की हुई, आँसू बहानेवाले तपस्वियों के द्वारा अपने आश्रम की सीमा तक अनुगमन की हुई इन्दीवरप्रभा पत्नी को लेकर घोड़े पर चढ़कर राजधानी की ओर प्रस्थान किया।

इसी बीच में दूर-मार्ग-गमन से थके हुए उस राजा को देखकर भगवान् सूर्य मानो दुखी होकर अस्ताचल के शिखर में प्रवेश कर गये। और क्रमशः मृग के नेत्रों के समान नेत्रवाली, बढ़े हुए काम-विकारवाली, अन्धकार में नीले कपड़े से शरीर ढकनेवाली, रात्रि में रमण करनेवाली अभिसारिका के समान मृगशिर-नक्षत्ररूपी नेत्रवाली, काम-विकार बढ़ानेवाली, अन्धकार-

भर्तुस्तु तस्य सा सुन्दरी जीवितादपि कृपणस्य सुचिरसञ्चिता समृद्धिरिव प्रियतराऽभूत्।

एकदाऽसौ मणिवर्मा उत्कण्ठया पित्रोरन्तिकगमनाय ताम्रलिप्तिं प्रातिष्ठत। ततो दिनेषु गच्छत्सु तीक्ष्णसूर्यांशुसायकैः प्रोषितानां निरुद्धमार्गः निदाघकालः समुपस्थितः। वसन्तविरहात् ककुभां निःश्वासा इव मल्लिकापाटलाऽऽमोदमेदुरा मरुतो वान्ति स्म। पवनोद्धूता रेणुराजयः तप्तया भुवा घनागमायेव गगनं प्रहिता दूत्य इव समुत्पेतुः। दिवसा अपि कठोरातपतापिताः आकाङ्क्षिततरुच्छायाः पथिका इव चिरेण यान्ति स्म। निशाश्च चन्द्रांशुपाण्डुरच्छायाः। गाढाश्लेषसुखप्रदं हेमन्तं विना अतिदुर्बलतां ययुः। एतस्मिन् समये चन्दनानुलिप्ताङ्गी परिहिततनुवसना स्वगृहवातायनस्थिता अनङ्गमञ्जरी केनापि आप्तेन सुहृदा सहितं भव्यं युवानं रतिप्राप्तये सञ्चरन्तं नवोत्पन्नं स्मरमिव कमलाकरनामानं राजपुरोहितसुतं ददर्श। सोऽपि कमलाकरः इन्दोरिव मूर्त्तिमुपरिस्थितां तां कान्तां दृष्ट्वा सानन्दः

---

हो गया। उस पति की तो वह सुन्दरी बहुत दिनों में सञ्चित की हुई कृपण की सम्पत्ति के समान जीवन से भी अधिक प्रिया थी।

एक बार वह मणिवर्मा माता-पिता के पास जाने के लिये उत्कण्ठित होकर ताम्रलिप्ति नगरी को चला गया। इसके बाद कुछ दिन बीत जाने पर सूर्य की तेज किरणरूपी बाणों से परदेशियों का रास्ता रोकनेवाला ग्रीष्म ऋतु का समय उपस्थित हो गया। वसन्त के वियोग से दिशाओं के मुखनिःश्वास के समान मल्लिका और पाटला फूल की सुगन्ध से भरे हुए पवन बहने लगे। पवन से उड़ायी हुई धूलियाँ सन्तप्त भूमि के द्वारा मानों वर्षा ऋतु के लिये आकाश में भेजी हुई दूतियों के समान ऊपर उड़ने लगीं। दिन भी कठोर धूप से सन्तप्त होकर पेड़ों की छाया चाहते हुए पथिकों के समान बहुत देर में जाने लगे। और रातें भी चन्द्रमा के किरणों से पाण्डुकान्तिवाली गाढ़ आलिङ्गन का सुख देनेवाले हेमन्त के विना अत्यन्त दुर्बल हो गयी। इसी समय में चन्दन से लेपित अङ्गवाली महीन वस्त्र पहने हुए अपने घर की खिड़की पर बैठी हुई अनङ्गमञ्जरी ने किसी विश्वासी मित्र के साथ रति को प्राप्त करने के लिए घूमते हुए नवीन उत्पन्न कामदेव के समान राजा के पुरोहित के पुत्र कमलाकर नामक एक सुन्दर युवक को देखा। वह कमलाकर भी ऊपर में बैठी हुई चन्द्रमा की मूर्ति के समान उस सुन्दरी को देख कर आनन्दित हो कर

कुमुदाकरतामभजत्। तदा तयोः यूनोरन्योन्यावलोकनं स्मरस्य गुरोरनुज्ञया अचूर्णं मनःसंवलनमभूत्। इत्थं तां दृष्ट्वैव स कमलाकरः सद्यो मदनाविष्टः सुहृदा तेन कथञ्चित् स्वं भवनमनीयत। सा चानङ्गमञ्जरी तथैव मन्मथमोहिता सख्या मुखात् तन्नामधामनी श्रुत्वा तथैव सह शनैः वासकं विवेश। तत्र तं कान्तं सञ्चिन्तयन्ती कामज्वरातुरा शयनीये केवलं लुठन्ती किमपि नापश्यत् नाप्यशृणोत्।

इत्थं गतेषु द्वित्रेषु दिनेषु सत्रपा सभया विरहेण कृशपाण्डुरा दुष्प्रापप्रियसम्भोगनिरास्था नक्तमेकदा गवाक्षप्रेरितकरेणेन्दुना आकृष्टेव सुप्ते परिजने निर्गत्य मरणनिश्चया स्वगृहोद्यानवापीं तरुतलवर्त्तिनीमगात्। तत्र पित्रा कृतप्रतिष्ठां कुलदेवतां चण्डीं समुपेत्य प्रणम्य स्तुत्वा च व्यजिज्ञपत्,—"देवि! अस्मिन् जन्मनि चेत् न मया कमलाकरः पतिः प्राप्तः, तदा अन्यस्मिन् जन्मनि स मम पतिर्भूयात्" इति प्रार्थ्य तस्या देव्याः पुरतः अशोकपादपे स्वोत्तरीयेण पाशं विर-

---

कुमुद सरोवर के समान प्रसन्न हो गया। उस समय उन दोनों युवकों का परस्पर अवलोकन कामदेवरूपी गुरु की आज्ञा से बिना गोंद के ही मन-जोड़नेवाला हो गया। इस प्रकार उसको देखकर ही वह कमलाकर उसी समय काम-वशीभूत हो गया, फिर उस मित्र के द्वारा किसी प्रकार अपने भवन में लाया गया। उस अनङ्गमंजरी ने भी उसी प्रकार काम से मोहित होकर सखी के मुख से उसके नाम और घर सुन कर उसी के साथ धीरे-धीरे अपने निवासगृह में प्रवेश किया। वहाँ उस प्रियतम के विषय में सोचती हुई काम-ज्वर से व्याकुल हो कर केवल इधर-उधर लोटती हुई वह न तो कुछ देखती थी और न कुछ सुनती थी।

इस प्रकार दो-तीन दिन बीत जाने पर भयभीत तथा लज्जित और विरह से दुबली तथा पाण्डुवर्ण की बनी हुई दुष्प्राप्य प्रियतम के सम्भोग से निराश हो कर वह अनङ्गमञ्जरी एकबार रात में खिड़की से अपनी किरणं प्रवेश करानेवाले चन्द्रमा के द्वारा खींची हुई के समान अपने परिजनों के सो जाने पर घर से निकल कर मरने के लिये निश्चय कर के पेड़ के नीचे रहनेवाले अपने घर के बगीचे के तालाब के पास गयी। वहाँ अपने पिता के द्वारा स्थापित की हुई कुलदेवता दुर्गा जी के पास पहुँच कर प्रणाम और स्तुति कर के निवेदन करने लगी—"हे देवी जी! यदि इस जन्म में मुझे कमलाकर पति नहीं मिला तो दूसरे जन्म में वह मेरा पति होवे" यह प्रार्थना कर के उस देवी के सामने अशोक के वृक्ष में अपने दुपट्टे से फाँसी लगायी।

